

# वेदेषु धर्मभेदः



इन्द्र ऋभुमान्वाजवान्मत्स्वेह नोऽस्मिन्त्सवने शच्या पुरुष्टुत ।
इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्म्मभिः॥
(ऋक् सं. ३ मं। ६० सू ६ ।)





चैत्रशुक्ला त्रयोदशी
शनिवार वि० सं० १९९३

ले० मोतीलालशर्मा गौड़ः
जयपुरीयः

# वेदेषु धर्मभेदः

( लेखकः— वि० श्रीमोतीलालशर्म्मा, गौड़ः-जयपुरीयः )

ओष्ठापिधाना नकुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ॥

'वेदोऽखिलो धर्ममूलम्' ( मनुः २।६ ), 'यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्त्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः' ( मनुः २।७ ), 'ताभ्यां धर्मो हि निर्बभौ' (मनुः २।१०), 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे'(मनुः१।२१),'भूतं भव्यं भवच्चैव सर्वं वेदात् प्रसिद्ध्यति' (मनुः१२।६७).'धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः' ( मनुः २।१३ )- इत्येवमाचक्षाणास्तत्र भवन्तो विदितवेदितव्या अधिगतयाथातथ्याश्चिरन्तना आर्यमहाभागा. साभिनिवेशं वेदस्यैव सर्वमूलभूतत्वम्, *सर्वधर्म्मप्रवर्त्तकत्वम्, ऐहिकामुष्मिकोभयलोककल्याणकरत्वम्, अत एव च सर्वथोपादेयत्वमभिमन्यन्ते ।

साम्प्रतं हि केचन वैदिकम्मन्या महाशयाः सर्वत्र जगतीतले वेदध्वजमारोपयन्तो वेदोद्धारे बद्धपरिकराः सन्तः प्रत्यवतिष्ठन्ते—यद् वेदः खलु—एकस्यैवाभिन्नधर्म्मस्याधारभूमिः । 'स्वकपोलकल्पनया नानाधर्मभेदान् मन्यमाना रूढिवादिनः साहसिका एव राष्ट्रसभ्यतायास्तत्समुन्नतेश्च अन्यतमाः शत्रवः' इति हि तेषां विश्वासः । पाश्चात्त्यशिक्षादीक्षितानां साम्प्रतिकानां सभ्यमहाशयानामप्यत्र पक्ष एव सहयोगः । तत्रेयं विचारणा—यद् वेदेषु धर्मभेदोऽस्ति न वा ? यद्यस्ति तर्हि किं स्वरूपं तस्य ? नास्ति चेत्तत् कथम् ? तदत्र निबन्धे 'वेदेषु धर्मभेदः' इति स्वपक्षसमर्थनपूर्वकं समाधिः प्रवर्त्तते । आशास्यते-'सत्यसंहिता वै देवाः' 'अनृतसंहिता मनुष्याः' (शत० ब्रा० १।१।३-४) इति +नैगमिकं श्रौतसिद्धान्तं पुरतो निधाय मनुष्यसुलभदोषानुपेक्ष्य विचारविषयेऽस्मिन् दत्तावधाना भवेयुस्तत्र भवन्तो भवन्त इति ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिँ सर्वतः स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥

( यजुःस०३१।१ ) इत्येवंरूपेण उपवर्णितस्य द्यावापृथिव्यात्मके 'स्तौम्यंत्रिलोकी' ति नाम्ना प्रसिद्धे रोदसीब्रह्माण्डे अग्निवाय्वादित्यरूपेण व्याप्तस्य, वैश्वानर-हिरण्यगर्भ-सर्वज्ञात्मकस्य अध्यात्मदृष्ट्या सार्द्धदशाङ्गुलस्य भगवतो विराट्पुरुषस्य प्रतिष्ठाभूतायामिह खलु जगत्यां लब्धजन्मानः सर्वेऽपि मानवाः स्वाभ्युदयमैकान्तिकं सुखं च नित्यं कामयन्ते, मन्यन्ते चोपागतं दुःखं विषभूतमिव । तस्यैतस्य दुःखार्णवस्य पारपारगमनाय बहुश. प्रयतमाना अपि ते निराशासमुद्रे निमग्ना एव दृश्यन्ते । तदित्थं पृथिवीतलेऽवतीर्णानां सच्चिदानन्दब्रह्मणोऽशभूतानामत एव सच्चिदानन्दरूपाणां सर्वविधप्राणिजाते ज्ञानशक्ति-क्रियाशक्त्यर्थशक्तिवि-

*ब्राह्मणधर्म्मः, क्षत्रियधर्म्मः, वैश्यधर्म्म , राजधर्म्मः, स्त्रीधर्म्म इत्येवंरूपेण सनातनधर्म्मान्तर्गतानाम्, अवान्तरधर्म्माणां सर्वेषामेव मूलाधारत्वेन वेदस्य सर्वधर्म्मप्रवर्त्तकत्वमवसेयम् ।

+ विज्ञानतत्त्वप्रतिपादकानि वेदवचनानि ' निगमः ' 'अनुगम' इत्येवं द्वेधा विभक्तानि द्रष्टव्यानि । तत्र नियतार्थप्रतिपादकानि वचनानि निगम-शब्देन व्यवहृतानि, यौगिकार्थप्रतिपादकानि तु आगमशब्देन व्यवहृतानि द्रष्टव्यानि । तदेतत् सर्वं निगमानुगमप्रपञ्चन श्रीगुरुप्रणीते निगमबोधनामकग्रन्थे द्रष्टव्यं जिज्ञासुभिः ।

षये शिरोमणिभूतानामेतादृशां मानवानां सततमुद्योगेनापि कुतो न लेशतोऽपि सुखप्राप्तिरिति सुलभतयैव प्रष्टुं शक्यते भवद्भिः।

तस्यैतस्य प्रश्नस्यानेकान्यपि प्रत्युत्तराणि दीयन्तां नाम लोकैस्तथाप्यस्माकं त्वेष एव दृढनिश्चयो यद् वैदिकधर्म्माचारविचारशून्यैः, वेदाभिमतमत एव वैज्ञानिकमत एव च सर्वथा उपादेयं धर्म्मभेदमसहमानैः, पाश्चात्यशिक्षादीक्षितमहाभागैर्विज्ञानकृतस्य धर्म्मभेदस्योन्मूलनाय आविष्कृता ये समानधर्म्माभासमूलका आचारव्यवहारास्तेषां क्रमिकोन्नतिरेव निरवच्छिन्नमुद्योगशीलानामतिप्रतिभावतामपि सुखप्राप्तौ प्रतिबन्धक इति।

वेदविहितस्वस्वनियतधर्म्मस्यापरिपालनादेव भारतो-(भाः प्रकाशः, तस्मिन् रतः-प्रकाशयुक्तः सुसभ्य इति यावत्) अधुना भाहतः संजात इत्येवास्माकं दृढविश्वासः। तस्माद्—आत्म-प्रजा-पशु-समाज-देश-राष्ट्रादीनां स्वरूपरक्षणाय, अभ्युदयनिःश्रेयससिद्ध्यर्थमैहिकामुष्मिकसुखसाधनैकभूतोऽयं 'वैदिकधर्म्मभेदः' अवश्यमेवास्माभिः परिपालनीय इत्यस्ति प्राचीनानामार्षमहाभागानामादेशः। तदैवास्माकं समुन्नतिर्नान्यथा।

तद्विरुद्धं च-आधुनिकाः कथयन्ति-'यत् शास्त्रेषु 'एवं निर्दिष्टम्' एतावतैव तदस्माभिः स्वीकरणीयमिति तु जाड्यश्रद्धोपेतानामवैज्ञानिकानां यथाजातानां रूढिभक्तानां राद्धान्तः। वयं तु खलु समयगतिपरीक्षकाः वैज्ञानिकाः प्रकृतिसिद्धशाश्वतधर्म्मानुयायिनः। समयश्च प्रचलच्छकटीचक्रमिव नैकत्र स्थायी-इत्याचारा व्यवहारा अपि मनुष्याणां न सर्वदा समाना भवितुमर्हन्ति। ग्रीष्मे सद्योमन्थनोत्थपयःफेनोपमानि मृदुसूक्ष्माणि यथा सुखयन्ति वासांसि, न तथा हेमन्तेऽपि तानि हितायन्ते। तस्मात् समयगतिमवलोक्य, कल्पितमेनं धर्म्मभेदं सर्वथा परित्यज्य राष्ट्रकल्याणार्थमभिन्न एव कश्चन धर्म्मः परिपालनीयः। इदमेव न, अपि तु समयगतिमभिलक्ष्य, धर्म्मभेदप्रतिपादकेषु स्मृतिपुराणनिबन्धादिधर्म्मग्रन्थेष्वपि परिवर्त्तनमावश्यकम्।

यद्यपि केचन मिथ्याधर्म्माभिमानिनः समाजभक्षकाः पूर्वजन्मार्जितकर्म्मज्ञानजनितवासनाभावनारूपकुसंस्कारवशात् तमेव विशीर्णवदनम्, नष्टभ्रष्टाङ्गम्, नूतनसभ्यसमाजेऽनुपयुक्तम्, नवीनसभ्यताभाजां नवयुवकानां कोमलान्तःकरणेषु वज्रायमाणम्, शिक्षापथमारोढुमिच्छन्तीषु वीराङ्गनासु लज्जा-शील-सौजन्यादि-दुर्गुणसमूहोत्पादनद्वारा ता उन्नतिपथान्निवारयन्तम्, विविधवोढ्वाह्नास्पृश्योद्धार—सहभोजान्तर्जातीयविवाहसारडाएक्टादिपरमोत्तमोत्तमसत्कार्येषु अर्गलायमानम्, किं बहुनातिपल्लवितेन, सर्वथैवानिष्टकारिणम्, स्वार्थपरायणैः समाजभक्षकैः स्वार्थवशात् परिकल्पितं धर्म्मभेदमेनं परिपालयितुमादिशन्ति। परन्त्वास्तां तावत् तेषां करुणक्रन्दनम्। यतः खलु सोऽयं प्राक्तनो धर्मभेद आरण्यकः, लौह-पाषाण-ताम्रादिभेदभिन्नः, यस्मिन् युगेऽस्माकं जीवनमारण्यकत्वेन विज्ञानशून्यत्वेन व्यत्येति स्म। तत्र चाधुनिकशिक्षालयेषु पाठ्यक्रमे प्रवर्त्तमानः अस्माकमितिहास एव साक्षिरूपेण जागर्त्ति। तत्र तत्रेतिवृत्ते-अस्माभिरवलोक्यते, यत्तस्मिन् समये लेखनप्रणाल्या अभावादेव शास्त्राणि कण्ठस्थान्येव कुर्वन्ति स्म प्राचीनाः। तन्मूलकमेव भारतीयं वैदिकशास्त्रमद्यापि 'श्रुति' शब्देनाचक्षते विद्वांसः। परन्तु नास्त्यावश्यकता ऽस्मिन् समये विषमदुःखसहनस्य, यस्मिन् समये न केवला लेखनप्रणाल्येव प्रचलिता, अपि तु सहस्रशो मुद्रणयन्त्राण्यपि भारतेऽस्मिन् विलसन्ति। कः खलु मन्येत यदेतादृशं सौकर्य्यं त्यक्त्वा कारणेन विनैव तदसह्यकष्टं सहनीयमिति।

वयं तु खलु समयाभिज्ञाः प्रेक्षापूर्वकारिणो सारासार-विवेकशालिनः। ईश्वरेण तादृग् बुद्धिबलं दत्तमस्मभ्यं येन वयं स्वयमेव स्वबुद्धिबलद्वारा स्वस्वकार्यसाधने समर्थाः। अतः—

'तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति' इत्यभियुक्तयोक्त्या अस्मिन् प्रकाशमये विज्ञानयुगे अवैदिकस्य अत एव शास्त्रविरुद्धस्य धर्म्म-भेदस्य क्रन्दनं त्यक्त्वा—

"यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न पराङ्गतिम्।
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्तुमिहार्हसि॥"
(गीता० १६।२३-२४)

इति भगवदादेशमुरसि निधाय—

"सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै॥
सङ्गच्छध्वं, सं वदध्वं, सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे सञ्जानाना उपासते॥
समानो मन्त्रः समितिः समानी,
समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभिमन्त्रये वः
समानेन वो हविषा जुहोमि॥
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥
ब्रह्मैवेदं सर्वं नेह नानास्ति किञ्चन।
यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।
उदारचरितानां तु वसुधैव कुटुम्बकम्।"

इत्यादि-श्रुतिस्मृतिपुराणसिद्धोऽद्वैतसिद्धान्तरूपः, अभेदमूलकः, शब्दान्तरेण ब्रह्ममूलकः, एकः कञ्चनाभिन्न एव वैदिको धर्म्मोऽस्माभिरङ्गीकार्यः, तस्यैव वेदसिद्धत्वात्, अतस्तस्यैव कल्याणकरत्वात्।

"यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः"—इति तर्क-विज्ञानसिद्धस्यैवाभियुक्तैः प्रामाण्याङ्गीकारे पूर्वोक्तस्य च धर्म्मभेदस्य तर्कविज्ञानशून्यत्वात्, शास्त्रविरुद्धत्वात्, अत एव च सर्वथा निःसारत्वात् सोऽस्माभिर्दूरत एव त्याज्यः। तदैवास्माकं समुन्नतिर्नान्यथा, इति द्वितीयः पक्षः।

तदित्थमेकस्मिन् धर्म्मिणि विरुद्धनानाकोट्यवगाहिज्ञानात् तटस्थवृत्तिमतां जिज्ञासूनां सम्मुखे 'धर्म्मभेदो वैदिकः, उत अवैदिकः? धर्म्मभेदो हानिकरः, उत लाभकरः? इत्येष संशयः परिस्फुरति।

तन्निर्णयार्थमेष वैज्ञानिको निबन्धः प्रारभ्यते—

इह खलु सम्यक् सरणशीले संसारे यावन्तः पदार्था विद्यन्ते, सन्ति ते प्रतिक्षणं परिवर्तनशीला अत एव च विकुर्वदाकारयुक्ताः। विकुर्वदाकारत्वेनैव च संसारेऽस्मिन् प्रतिक्षणं वैलक्षण्यमनुभूयतेऽस्माभिः। यद्यप्येतद् वैलक्षण्यं तेषु तेषु पदार्थेषु न तस्मिन्नेव समयेऽनुभूयते, परन्तु किञ्चित्कालानन्तरं स्थूलावस्थायां परिणतं वैलक्षण्यं दृष्ट्वाऽनुमीयते-यत् प्रतिक्षणमेव तेषु पदार्थेषु परिवर्त्तनं जायत, इति। तत्तु प्रतिक्षणं जायमानं परिवर्त्तनमतिसौक्ष्म्याद्-अस्माभिः प्रत्यक्षीकर्तुं नैव शक्यते। 'अस्मिन् पदार्थेऽस्मिन्नेव क्षणे वैलक्षण्यमुत्पन्नं न तस्मिन् क्षणे' इत्यत्र विनिगमनाविरहात्, प्रतिक्षणमेव वैलक्षण्यं भवति' इत्येव कल्पना समीचीना तर्कसिद्धा च प्रतिभाति। यथा हि—अनुष्णाशीते दुग्धे यस्मिन् क्षणे दध्यंशस्यातञ्चनं दीयते, तत एवारभ्य दुग्धे स्वरूपपरिवर्त्तनस्य प्रारम्भो

जायते। परन्तु तस्मिन् समये तस्य परिवर्त्तनस्यातिसौ-दम्यात्तन्नोपलभ्यते। परिवर्त्तनक्रमेण यदा सर्वदुग्धस्य दधिस्वरूपे परिणामो जायते, तदा तु दुग्धाधारभूतेन रसरूपधाराबलेन क्षणस्थायिन्या अपि क्रियाया—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥"

इति हरिसिद्धान्तानुसारमेकत्र समष्टिरूपेण प्रतीयमानत्वात् तत्र क्रियायां 'दधि' इत्याकारकवैलक्षण्यस्य स्फुटप्रतीतिर्जायत एव। एतमेव क्रियाभावं आश्रित्य श्रमानुयायिनो दार्शनिका आहुः—

"सर्वमिदं दृश्यमानं क्षणिकं क्षणिकम्, शून्यं शून्यम्, दुःखं दुःखम्, स्वलक्षणं स्वलक्षणम्" इति।

तदित्थमस्मिन् संसारे यावन्तः पदार्था विद्यन्ते सर्वेऽपि ते प्रतिक्षणं परिवर्त्तनशीला अत एव च परस्परं भिन्ना इत्यवगन्तव्यम्।

उक्तं पूर्वं क्रिया खलु विनाशस्वरूपा एव। नास्ति, अस्ति, नास्ति इति कृत्वा मध्यत. सत्तारससम्बन्धात्-अस्तिभावेन प्रतीयमानापि वस्तुतः सा नास्तिसारैव। नामरूपकर्म्मात्मकाः सर्वेऽपि पदार्थाः क्रियापेक्षया क्षणिका इत्यत्र तु नास्ति विप्रतिपत्तिः। अत्रेयं विचारणा यदि सर्वे पदार्थाः क्षणिका एव स्युस्तर्हि तेषामनुपलब्धिः स्यात्। परन्तु उपलभ्यन्ते अस्ति भावेन सर्वे पदार्थाः। प्रतिक्षणं परिवर्त्तमानेऽपि देवदत्ते, 'स एवायं देवदत्तो यः पुरा मथुरायां मया दृष्टः' इत्यस्तिमूला प्रत्यभिज्ञा जायते। सैषा नित्या सत्तैव 'ब्रह्म' शब्देनाख्यायते वेदज्ञैः। सर्वोपाधिविनिर्मुक्तां तामेतां सत्तामभिलक्ष्यैवाहुः प्राचीनाः—

"प्रत्यस्ताशेषभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्म संज्ञितम्" इति।

तदिदं सत्ताब्रह्म निर्विकारत्वात् सदैकरसत्वात् 'अमृत' नाम्ना प्रसिद्धम्। पूर्वोक्तः क्रियाकलापस्तु सविकारत्वात्, नास्तिसारत्वात् मृत्युरूपः। अमृतमृत्युभावयोः समष्टिः सर्वम्। तस्यैतस्यामृतमृत्युमयस्य ब्रह्मण उपनिषदोमित्येकाक्षरम्। ब्रह्मणोऽशभूतस्यामृतमृत्युमयस्य जीवात्मन उपनिषदहमिति। विश्वस्योपनिषदहरिति। ओम्-अहम्-अहः-इत्येते उपाधिदृष्ट्या भिन्ना अपि परमार्थतोऽभिन्ना एव प्रत्येतव्याः। एतस्यैव पूर्वोक्तस्य ब्रह्मतत्वस्य स्वरूपं प्रदर्शयन्नाह भगवान् कृष्णः—

"अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन" इति। अमृते मृत्युः, मृत्यौ च अमृतम्, इत्युभयोः परस्परमोतप्रोतभावसम्बन्धः। अङ्गुल्यां वा क्रिया, क्रियायां वा अङ्गुलिः, इत्यसमाधेयः प्रश्नः। नात्र आधाराधेयभावसम्बन्धः, अपि तु अन्तरान्तरीभावसम्बन्धः। यदवच्छेदेनामृतसत्ता, तदवच्छेदेनैव मृत्युर्नित्यमवतिष्ठते। एष एवान्तरान्तरीभावसम्बन्धः। एतदेवाभिप्रेत्य वेदपुरुष आह—

'अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्'—
(शत० ब्रा० १०।५।२।३) इति।

तत्र नित्यशान्तं निर्विकारं एकरसं तु केवलं ब्रह्म एव। ब्रह्मातिरिक्तं सर्वमपि प्रपञ्चजातं विभिन्नैर्धर्म्मैर्नित्यमाक्रान्तम्। एतेनैव च धर्म्मभेदेन जगतः स्वरूपस्थितिर्जायते। यदि चैतेषु पदार्थेषु धर्म्मभेदो न स्यात् तदा संसारस्यैवोच्छित्तिः स्यात्। यथा हि भगवान् सविता औष्ण्येन स्वधर्मेण अन्नादेः परिपाकं करोति, प्रकाशयति च प्रकाशेन पदार्थजातान्। एवमेव चन्द्रोऽपि आप्यायनरूपस्वधर्मेण सर्वा ओषधीराप्याययति, चान्द्ररसेन युक्ताश्च ता इमाः पुष्यन्ति पोषयन्ति च जीवान् स्वधर्मेण। एवमेव च पृथिवी धृतिस्वरूपधर्मेण सर्वेषां स्थावरजङ्गमानां धारणं करोति। स एष सर्वेषां

धर्म्मपरिणामभूतः क्रियाकलाप एव संसारः। यदि च पूर्वोपपादितो धर्म्मभेदो न स्यात्, तदा नायं संसारः संसारःस्यात्। एकमेवाद्वितीयं ब्रह्म एव केवलं स्वप्रतिष्ठं स्यात्। स चायं धर्म्मभेदः-अद्वैतवादिभिः काल्पनिको वाभिमन्यताम्, प्रमाणप्रमेयादिव्यवहाराभिनिविष्टैर्वा-स्तविको वाभिमन्यताम्, तमनुरुध्य जगतोऽप्यस्य कल्पनाकल्पितत्वं, वास्तविकत्वं वा सेत्स्यति। अस्तु-तावत् सेयं सर्वापि वस्तुकथा दार्शनिकी. अतस्तस्या अत्र विशदीकरणेन नास्माकं प्रयोजनम्। साम्प्रतं तु धर्म्मार्थ-काममोक्षरूपपुरुषार्थचतुष्टये प्रधानभूतस्य विहितानुष्ठानलक्षणस्य वेदमूलकस्य धर्म्मस्य सम्बन्धे विचारः क्रियते।

अस्य हि धर्मस्य ये ये प्रवर्त्तन्ते अद्यत्वे विविधा-भेदाः—ब्राह्मणधर्मः, क्षत्रियधर्म्मः, वैश्यधर्म्मः, शूद्र-धर्म्मः, राजधर्म्मः, स्त्रीधर्म्मः, आश्रमधर्म्म इत्याद्यास्ते किं मूलकाः? कथंभूतो वा तत् परिणाम? इतिः।

इदानीन्तना हि लोकाः पूर्वकथनानुसारेण धर्मभेद-मेनं सर्वथानर्थोत्पादकमेवाकलयन्ति , मन्यन्ते च ते तत एव आर्यजातेः पतनम्। परन्तु विदितवेदितव्या अधिगतयाथातथ्याश्चिरन्तना आर्यास्तु प्राक्तनसंस्कार-स्वरूपदृढरज्जुनिगृहीता इव धर्मभेदमेनं सर्वथा प्रामाणिकं सर्वार्थसाधकं चाभिमन्यन्ते।

अत्रायं विशेषः—यः खलु धर्मभेद उक्तः स द्वि-विधः प्रत्येतव्यः—ज्ञानकृतश्च, अज्ञानकृतश्च। तत्र विज्ञानकृतधर्म्मभेदः सर्वथाभ्युदयाय कल्पते, पर-स्त्वज्ञानकृतो धर्म्मभेदः सर्वथा विनिपातायैवोपकल्पते। तत्र अभ्युदयैकसाधनभूतस्य वेदोदितस्य भेदमूलक-धर्म्मस्यैव निरूपणमावश्यकमतस्तदेव धर्म्मस्वरूपं प्रथमतः श्रीमतां समक्षे संक्षेपेणोपस्थाप्यते।

तत्र-'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः' इति भगवान् कणादो धर्म्मलक्षणं प्रतिपादयति। 'चोदना-लक्षणोऽर्थो धर्म्मः' इति च भगवान् जैमिनिर्धर्म्मलक्षणं व्याचष्टे। अथ भगवान् मनुश्च—

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्म्मस्तं निबोधत॥"

इति वदन् निर्दोषविद्वदाचरणीयतां, हृदयाभ्यनुज्ञाततां च धर्म्मलक्षणमन्वाह। वस्तुतस्तु पूर्वोक्तेषु धर्म्मलक्षणेषु सूक्ष्मदृष्ट्या विचारकरणेनाभिन्नमेव तात्पर्य्यमालोकयामः।

वैय्याकरणास्तु ध्रियते इति धर्म्मः, धरतीति वा धर्म्मः, इतिकर्म्मणि कर्त्तरि वा धर्म्मशब्दं व्युत्पाद-यन्ति। धर्म्मो हि नाम क्रियारूपो वाऽस्तु, तज्जनितो-ऽतिशयविशेषो वा अस्तु, उभयथाप्ययं धर्म्मिणा ध्रियत एव। अस्मिन् संसारे यत् किञ्चिदपि जड़चेतनात्मकं वस्तु अवलोक्यते, तत् सर्वमपि क्रियया नित्यमाक्रान्तं वर्त्तते। नास्त्येतादृशः कश्चिदपि पदार्थः संसारे यस्मिन् कदाचित् काचिदपि क्रिया नोपलभ्येत। तमेतं नित्यसिद्धं क्रियाभावमभिलक्ष्यैवोक्तं भगवता पुरुषोत्तमेन—

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्।
कार्यते ह्यवशः कर्म्म सर्वः प्रकृतिजैर्गुणैः॥
(गीता ३।५।)इति।

अस्याश्च पूर्वोक्तायाः क्रियाया द्विविधो भवति परिणामः। यथा हि काचित् क्रिया स्वाश्रयभूतं पदार्थं स्थिरीकरोति, अर्थाद् रक्षति। काचिच्च स्वाश्रयभूतस्य पदार्थस्य नाशं विधत्ते। निदर्शनञ्चात्रास्माकं शरीर-मेव। पाञ्चभौतिकेऽस्मिन् शरीरे काचित् क्रियानवरत-मेतादृशी भवति, ययास्माकं शरीरस्य स्थितिरुपपद्यते। सैषा क्रिया अन्नाहरणरूपा भवति। चित्यचितेनिधेय-

भेदादग्निर्द्विविधः। पृथिव्याम्-अन्तरिक्षे, दिवि च क्रमशः प्रतिष्ठितस्याग्नेः, वायोः आदित्यस्य परस्परसंघर्षाद्-उत्पन्नस्तापधर्म्मा अग्निर्वैश्वानरः । पृथिवी इत्येकं विश्वम्। अन्तरिक्षमिति द्वितीयम्। द्युलोकश्च तृतीयं विश्वम्। तेष्वेतेषु विश्वेषु अधिष्ठातृरूपेण अग्निवाय्वादित्याः प्रतिष्ठिताः। अग्निः पृथिव्या अधिष्ठाता। वायुरन्तरिक्षस्य। 'इन्द्रतुरीया ग्रहाः गृह्यन्ते' इति श्रौतसिद्धान्ताद् वायौ मरुत्वत इन्द्रस्य नित्यसम्बन्धो विज्ञायते। अत एव च वायुग्रहः—'ऐन्द्रवायवग्रह' इति नाम्ना प्रसिद्धः। यत्र वायुस्तत्रेन्द्रः, यत्र वा इन्द्रस्तत्र वायुः। इन्द्रस्य वरुणस्य च प्रतिद्वन्द्विभावः। अप्सु वरुणः प्रतिष्ठितः। यत्र वरुणस्तत्र नेन्द्र., यत्रेन्द्रस्तत्र न वरुणः, उभयोरश्वमहिषवत् सन्वधात्। इन्द्रः खलु 'इन्द्रशचि' इतिनाम्ना प्रसिद्धया पाश्चात्यविज्ञाने च 'एनर्जि' नाम्ना प्रख्यातया स्वशक्त्या, वायुद्वारा पदार्थेषु वसन् तद्गतान् वरुणमूलकान् दूषितपरमाणून्—विनाशयति। यत्र वायोर्निरोधस्तत्रेन्द्रनिरोधः। इन्द्रनिरोधे च वरुणप्रवेशः। वरुणश्च स्वपाशद्वारा सन्नह्य सर्वं दूषितं करोति। एतमेव वायुविज्ञान निरूपयन्तो वैज्ञानिका आहुः—

'यद्वै वातो नाभिवाति तत् सर्वं वरुणदैवत्यम्'

इति। एतेन चेदं निष्कृष्यते यद् वायौ वर्तते इन्द्रः। अतश्च अन्तरिक्षस्याधिष्ठाता वायुश्च—इन्द्रश्च। द्युलोकस्य तु द्वादशादित्यात्मकः सूर्यः। एतदेवाभिप्रेत्य नैगमिका आहुः—

'अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः, सूर्यो द्युस्थान इति' (यास्कनि० दै० कां० ७।५) ता एतास्तिस्रो देवता वैश्वानराग्नेराधारभूता अवगन्तव्याः। 'विश्वेषां नराः-विश्वानराः विश्वानरेभ्यो जातोऽग्निर्वैश्वानरः' इति कृत्वा लोकत्रयावच्छिन्नोऽग्निः प्राणापानव्यानमूर्तिस्तापधर्म्मा— वैश्वानरशब्दभाक् सजातः। तथा चोक्तम्—'स यः स वैश्वानरः-इमे स लोका.। इममेव पृथिवी विश्वमग्निर्नरः, अन्तरिक्षमेव विश्वं वायुर्नरः, द्यौरेव विश्वमादित्यो नरः'(शत०ब्रा० ६।३।१।३) इति। स एष एवाग्निः याज्ञिकपरिभाषायाम् चित्याग्नि' नाम्ना प्रसिद्धः। स एष भूताग्निर्भूतपतिः। पिण्डस्वरूपसमर्थकश्चित्याग्नेरुपादानभूतः शब्दान्तरेण प्रतिष्ठारूपः, रूपरसगन्धस्पर्शशब्दशून्यलक्षणो मौलिकाग्निरसृताग्निः। एष एव चितेनिधेयाग्निः। उभयविधोऽप्येषोऽग्निरन्नाद एव। यावदेव अन्नादाग्नौ अन्नाहुतिस्तावदेव तस्य स्वस्वरूपे स्थितिः। पाञ्चभौतिकं रसासृङ्मांसमेदोऽस्थिमज्जमयं शरीरं चित्याग्निमयम्। तत्र प्रतिष्ठितोऽग्निरन्नादः प्राणरूपः। तस्मिन्नेतस्मिन्नग्नौ—अहरहरन्नाहुतिजयते। हुतमन्नं ऊर्ग्रूपं परिणतं क्रमेण प्राणस्वरूपतां लभते। प्राणश्च पुनरन्नमिच्छति। इच्छया पुनरन्नाहुतिर्जायते। तदित्थ 'अन्नोर्क्प्राणानामन्योऽन्यपरिग्रहरूपः शरीरस्थितिसमर्पको यज्ञो नित्यमवतिष्ठते। यज्ञादेव सर्वे भावाः प्रजाताः—प्रजायन्ते—भविष्यन्ति च। एतदेवाभिप्रेत्योक्तमभियुक्तैः—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥
(गीता ३।१०) इति।

सर्वेषु पदार्थेषु अन्नादानात्मको यज्ञः प्रतिष्ठित। यज्ञकर्म्माधारे अन्यानि कर्म्माणि प्रवर्त्तन्ते। अतः यज्ञकर्म्म श्रेष्ठतमं कर्म्म। उक्तं च—

'यज्ञो वै श्रेष्ठतमं कर्म्म' (शत० ब्रा० १।७।१।५)इति।

तदिदमन्नाहरणरूपं यज्ञस्वरूपसम्पादकं कर्म्म 'आगति' शब्देनोच्यते बुधैः। सा हि आगतिरूपा क्रिया अन्नादिपदार्थाहरणद्वारा प्रतिक्षणमस्माकं शरीरपुष्टिं विदधती सती विद्यमाना भवति। एषैव

क्रियाशक्तिः पौराणिकैः 'विष्णुमाया' रूपेण स्तूयते। अन्या चास्माकं शरीरे एका स्थितिविरुद्धा क्रिया जायते। यया च क्रमशः शरीरहानिरपि सहैवोत्पद्यते। सा हि विरुद्धा क्रिया शरीरस्थानामन्नादिरसानामुत्क्षेपणं विधाय स्वाश्रयभूतं शरीरं स्वस्वरूपात् प्रच्यावयति। एषा हि विरुद्धा क्रिया पदार्थोत्क्षेपणत्वेन गतिशब्देनाख्यायते। सा हि गतिरूपा क्रिया शरीरविनाशे कारणत्वेन पौराणिकै 'रुद्रमाया' रूपेण स्तूयते। आदानक्रियया हृदयस्थो विष्णु' शरीरं रक्षति, विसर्गक्रियया रुद्रश्च शरीरं नाशयति। एष एव रुद्रो विज्ञानकाण्डे—'इन्द्रशब्देनोपवर्ण्यते। यत्रागतिस्तत्र-गतिः, यत्र वा गतिस्तत्रागतिरिति कृत्वा-उभावपि अभिन्नौ मित्रे। तदुक्तमृषिणा—

'विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे।
इन्द्रस्य युज्यः सखा' (ऋक् सं० १।२।७)

प्रतिवस्तु आत्मा—पदम्—पुनःपदम्—इतिकृत्वा त्रयो विवर्त्तभावा द्रष्टव्याः। वस्तुनो हृदयं वस्तुन आत्मा। यस्य यदुक्थं सत्—ब्रह्म सत्--सामस्यात् स तस्यात्मा, इत्यात्मनो लक्षणम्। प्रभवस्थानमुक्थम्; प्रतिष्ठास्थानं ब्रह्म. परायणस्थानं साम। हृदयादेव सर्वे भावा उत्तिष्ठन्ति-अतश्च 'उत्तिष्ठन्ति भावा यस्मात्' इति कृत्वा हृदयमेवोक्थम्। हृदये एव सर्वं प्रतिष्ठितम्। अतस्तदेतद् वस्तुनो ब्रह्म, हृदये एव तद्वस्तुगताः सर्वे भावा अपीता भवन्ति, इति हृदयमेव तद्वस्तुनः साम। तदिदमुक्थब्रह्मसामलक्षणं हृदयमेव वस्तुपिण्डस्यात्मा, इति निष्क्ष्यते। वस्तुपिण्डं पदम्। पिण्डस्थानाद् बहिर्विनिःसृतं यत् प्राणमण्डलं, तदेव पुनःपदम्। तदिद पुनःपदमेव 'महिमा' 'विभूति.' 'साहस्री' इत्यादि नामभि. प्रसिद्धम्। तत्र हृदये 'हृ' इत्येकमक्षरम्। द' इत्येकमक्षरम्। 'यम्' इत्यकमक्षरम्। यमित्यत्र 'स्वरोऽक्षरम्-सहाद्यैर्व्यञ्जनै' इतिप्रातिशाख्यसिद्धान्तादेकमेवाक्षरमवगन्तव्यम्। शब्दसृष्टिमर्यादया निश्चितसंकेतानुसारं 'हृ' इत्येतदक्षरं विष्णुतत्त्वस्य वाचकम्। आहरणक्रियया, कि वा आदानक्रियया हृदयस्थो विष्णुः शरीरं रक्षति। 'द' इत्येतदक्षरमिन्द्रतत्त्वस्य वाचकम्। खण्डनक्रियया, कि वा विसर्गक्रियया रुद्रापरपर्य्यायो हृदयस्थ इन्द्रः शरीरं नाशयति। उभयोः सम्बन्धो यत्र जायते सैषा तृतीया हृत्पुण्डीरस्था प्रतिष्ठारूपा निष्क्रिया स्थितिस्वरूपा ब्रह्मशक्तिः। एषैव नियमयति गत्यागतिभावान्। अत एव तस्या वाचकं यमित्येकाक्षरम्। पूर्वकथनानुसारेण वस्तुमात्रमादानविसर्गरूपक्रियया नित्यमाक्रान्तम्। एषा द्विविधापि क्रिया क्रिया नाम। क्रिया च स्वव्यापारार्थं निष्क्रियधरातलमपेक्षते। सैव तृतीया आधारभूता ब्रह्मशक्तिः। एषैवादानविसर्गयोः प्रतिष्ठा। अत एवोक्तं वाजसनेयश्रुतौ—'ब्रह्म वै सर्वस्य प्रथमजम्' 'ब्रह्म वै सर्वस्य प्रतिष्ठा' (शत० ब्रा० ६।१।१।६) इति। इत्थं च मूर्त्तद्रव्येषु सर्वेषु ब्रह्मविष्णुशिवरूपाणां स्थित्यागतिभावानां सत्ता सिद्धा भवति। यत् किञ्चावलोक्यते तत् सर्वं ब्रह्मविष्णुरुद्रात्मकमेव। एतदेवाभिप्रेत्योच्यते—

"एका मूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः"। इति

त्रिमूर्त्तिरेव प्रजापतिः। स एष प्रजापतिरेव स्थितिभावे परिणतो ब्रह्मा, गतिभावे इन्द्रो महेश्वरो वा, आगतिभावे विष्णुश्च निगद्यते। हृदयात्मकः स एष प्रजापतिः-नभ्यबिन्दौ प्रतिष्ठितः। तमेतं प्राजापत्यविज्ञानं निरूपयन् वेदपुरुष आह—

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि-
विश्वा। (यजुःसं० ३१।१९) इति।

उक्तं पूर्वं—शरीरे द्विविधा क्रिया जायते । आदानविसर्गात्मिका एषा द्विविधापि क्रिया धर्म्मिणैव ध्रियते, अतो ध्रियते इति वा, धरतीति व्युत्पत्त्या वा निष्पन्नस्य धर्म्मस्योदरे यद्यपि अस्याः शरीरविनाशभूतायाः क्रियाया अपि समावेशः प्राप्नोति, तथापि पूर्वा क्रिया आश्रयस्वरूपं रक्षति, द्वितीया तु स्वरूपमेवोच्छिनत्ति न रक्षति, तस्माद् द्वितीयां 'धरतीति धर्म्मः' इति कर्त्तरि व्युत्पत्तिमवलम्ब्य प्रथमोक्ता क्रियैव धर्म्मः, द्वितीया त्वधर्म्म इत्येवमेव प्रत्येतव्यम् । तथा च—'ध्रियमाणः सन् धरति—स्वयं धर्म्मिणा ध्रियते, धर्म्मिणं च स्वस्वरूपेऽवस्थापयति यः स धर्म्म' इति सिद्धम् ।

सर्वेष्वपि जड़चेतनात्मकेषु पदार्थेषु परस्परं सर्वथा विभिन्ना धर्म्मा विद्यन्ते-इत्युक्तं पूर्वम् । सिहावलोकनन्यायेन तस्मिन्नेव विषये पुनः किञ्चिदुच्यते—

ये धर्म्माः पूर्वं निदर्शितास्त इमे द्विविधा प्रत्येतव्याः-स्वाभाविकाश्च, आगन्तुकाश्च । तत्र स्वाभाविका धर्म्मा एव वस्तुनः 'स्वरूप' मित्युच्यते । यथा हि—न हि तावद् औष्ण्यप्रकाशौ विहाय वह्नेः किञ्चित् स्वरूपमस्ति । अतः अग्नेरौष्ण्यप्रकाशौ स्वाभाविकौ धर्म्मौ प्रत्येतव्यौ । एवमेव च शैत्यमाप्यायनं च विहाय जलस्य स्वरूपान्तरं नैव निवक्तुं शक्यते केनापि । परन्तु ये आगन्तुका धर्म्माः सन्ति, ते तु वस्तुषु वस्त्वन्तरसम्बन्धादापद्यन्ते विलीयन्ते च । तस्मादेते आगन्तुका धर्म्मा व्यभिचारिण एव भवन्ति । तदित्थमुभयविधानां धर्म्माणां ध्रियमाणत्वेऽपि स्वभावभूता धर्म्मा मुख्याः, आगन्तुका धर्म्मा गौणाः । परन्त्वत्रायं विशेषः-आगन्तुका धर्म्मा यदि स्वभावधर्म्मप्रतिकूला भवेयुस्तदा तु एते आगन्तुका धर्म्मा अधर्म्मा एव भवन्ति, वस्तुस्वरूपविनाशकत्वात्, मुख्यधर्म्मविरोधित्वाच्च । यथा हि—'आपो द्रवाः स्निग्धाः' इति सिद्धान्तादप्सु यो द्रवधर्म्मः स तस्य स्वरूपधर्म्मः । नव्यनये अपां द्रवत्वं सांसिद्धिकम् (नित्यम्) उक्तम् । परन्तु विज्ञानदृष्ट्या तन्मतं सर्वथा भ्रान्तिमूलकम् । धर्त्रापरपर्य्यायकतरलाग्निप्रवेशाद् आपो द्रवा जायन्ते, ध्रुवाग्निसम्बन्धात् ता एव घना जायन्ते । अप्सु या द्रवता, या च घनता सा अग्निसम्बन्धादेवोत्पद्यते । तदुक्तं त्वरतत्वप्रतिपादकेन भगवता कणादेन—

'अपां सङ्घातो विलयनं च तेजःसंयोगात्'
(वैशेषिकदर्शने) इति ।

तत्र योऽग्निरप्सु प्रविष्टः सन् तत्र जले द्रवभावं विधत्ते, सोऽग्निस्तत्र स्वरूपधर्म्मेण प्रविष्टः । सोऽयमग्निरात्मनस्तापधर्म्मं विहाय जलस्यात्मा भवति । तद् विनाशे जलस्वरूपनाशः, तत्सत्तायां च जलस्थितिः । पुनश्च बहिरग्निसंयोगाज्जलमुष्णं जायते । सोयमूष्मा अग्नेरागन्तुको धर्म्मः । यद्यस्यागन्तुकधर्म्मभूतस्य बहिरग्नेरप्सु आत्यन्तिकः सम्बन्धो जायते, तदा तु जलपरमाणवो विशकलिता भूत्वा बाष्परूपे परिणताः सन्त उत्क्रान्ता भवन्ति । अस्यामवस्यास्यामेष आगन्तुको धर्म्मो जलस्वरूपविनाशे प्रवृत्तः सन् अधर्म्म एव । इत्थं च—स्वभावभूतधर्म्मानुकूला क्रिया धर्म्मः,स्वभावभूतधर्म्मप्रतिकूला क्रिया सर्वथाप्यधर्म्म, इति निष्कृष्यते । एवं च पूर्वोक्तमिदमेव वस्तुधर्म्मवृत्तमस्माकं विचारविषयीभूते धर्म्मेऽपि योजनीयम् । तथा हि मनुष्येषु यन्मनुष्यत्त्वं नाम, तद् यादृशैर्व्यापारैर्यादृशैश्च द्रव्यसम्बन्धैरवस्थाप्यते, ते मनुष्याणां धर्म्मा उच्यन्ते । यैस्तु मनुष्यस्य पतनं जायते, भवन्ति ते मनुष्याणामधर्म्माः । एवमेव ये सभ्यताभिमानि लोकाः सन्ति, तेषां सभ्यता यया रीत्या रक्ष्यते सा रीतिस्तेषां धर्म्मः, विपरीता त्वधर्म्मः । इत्थमेव ब्राह्मणक्षत्रियादिवर्णाश्रमधर्म्मेष्वपि अनुगमनीयं लक्षणमिदम् । सोऽयं ब्राह्मणक्षत्रियवैश्यशूद्राणां कर्त्तव्यव-

स्थापको वर्णाश्रमधर्म्मविभागः काल्पनिकः ? उत वैज्ञानिकः ? इति विचारणायां प्रसङ्गात् किञ्चिदुच्यते ।

'प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च' इत्युक्तवता भगवता वसिष्ठेन जातिकर्म्मणी वर्णानां मूले उक्ते । न केवलं जात्या, न केवलं कर्म्मणा वा वर्णस्वरूपनिष्पत्तिः, अपि तु उभयमत्रापेक्ष्यते । बीजरूपेण नित्यप्रतिष्ठिताया जातेः कर्म्मणा एव विकासः । जन्मत एव नित्यभूताया जातेः कर्म्मणा विकासो जायते,नतु नवीना जातिनिष्पाद्यते तेन । यतो हि वर्णविभागो जातिकृत एव -अर्थाद् नित्य एव नतु काल्पनिकः । एष एव वैज्ञानिकानां वेदतत्त्वपरपारगामिनां निर्णयः । अस्यैव च वर्णविभागस्य नित्यतामाचक्षाणो भगवान् वासुदेव आह—

चातुर्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥
(गीता० ४।१३)

'गुणकर्मविभागशः' अनेन वाक्येन केचित् कल्पनारसिका व्यवस्थामेनां मनुष्यकल्पितां मन्यन्ते । परन्तु यदा श्लोकस्थे 'सृष्टम्' इति पदे दृष्टिर्निक्षिप्यते तदा अज्ञानमोहः स्वत एव विनाशभावं गतो भवति । पूर्वं चातुर्वर्ण्यं भगवता सृष्टम् , पश्चाद् वर्णानुसारं गुणकर्म्मणां विभागः कृतः । अपि च 'तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्' इत्युत्तरार्द्धेन तु स्पष्टमेवास्य नित्यत्वं सिद्धं भवति । चातुर्वर्ण्यनिर्म्माता अव्ययपुरुषः । सोऽयं पुरुषोत्तमनाम्ना प्रसिद्धोऽव्ययपुरुषः—

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति गीताक्षरेण साक्षादीश्वरः । स एव ब्राह्मणादिवर्णानां प्रभवः । तथा च वर्णानां नित्यत्वे लेशमात्रस्यापि सन्देहस्य नावसरः । अपि च न केवलं मनुष्येष्वेव,अपि तु पदार्थमात्रेषु सामान्यरूपेण एष वर्णविभागो द्रष्टव्यः । पशुषु तावत्-अजपशुर्ब्राह्मणः, अश्वः क्षत्रियः, गौर्वैश्यः, अविः शूद्रः । सर्पेषु सुवर्णाभाः पन्नगा ब्राह्मणाः, स्निग्धवर्णा भृशकोपनाः पन्नगाः क्षत्रियाः, लोहिता धूम्राः पारावताः सर्पा वैश्याः, भिन्नानेकवर्णा रूक्षत्वचः पन्नगा शूद्राः । वनस्पतिषु—अश्वत्थवटपलाशबिल्वादयो ब्राह्मणाः, देवदारुश्रीपर्णिकाश्मर्यादयः क्षत्रियाः, फलपुष्पप्रदातारः सर्वे वृक्षा वैश्याः, वंशादयः शूद्राः । कीटेषु—पुष्पादिषु ये कीटास्ते ब्राह्मणाः, शरीरगतसप्तधातुसम्बन्धिनः कीटाः क्षत्रियाः, कौशेयसूत्रनिर्म्मातारः कीटा वैश्याः, विष्ठादिनिकृष्टपदार्थेषु वर्त्तमानाः कीटाः शूद्राः । पक्षिषु-चक्रवाकपोतादयो ब्राह्मणाः, बकादिपक्षिणः क्षत्रियाः, मयूरादयो वैश्याः, काकगृध्रादयः शूद्राः । यज्ञेषु सोमयागो ब्राह्मणः, पशुबन्धः क्षत्रियः, इष्टयो वैश्याः, पाकयज्ञापरपर्य्यायको दर्वीहोमः शूद्रः । देवेषु-अग्निर्ब्राह्मणः, इन्द्रः क्षत्रियः, विश्वेदेवा मरुतश्च वैश्याः, तमोमयः पार्थिवः पूषा प्राणः शूद्रः । वेदेषु—सामवेदो ब्राह्मणः, यजुर्वेदः क्षत्रियः, ऋग्वेदो वैश्यः, चतुर्थश्चतुर्थः । दिक्षु—उत्तरा दिग् ब्राह्मणः, दक्षिणा दिक् क्षत्रियः, प्राची दिग् वैश्यः, प्रतीची शूद्रः । प्रकृतिषु—सत्त्वप्रकृतिर्ब्राह्मणः, सत्त्वरजःप्रकृतिः क्षत्रियः । रजस्तमःप्रकृतिर्वैश्यः, तमःप्रकृतिः शूद्रः । शक्तिषु—ज्ञानशक्तिर्ब्राह्मणः, क्रियाशक्तिः क्षत्रियः, अर्थशक्तिर्वैश्यः, पशुशक्तिः शूद्रः । बलेषु विद्याबलं ब्राह्मणः, ऐश्वर्यबलं क्षत्रियः । वित्तबलं वैश्यः , शरीरबलं शूद्रः । वर्णेषु—श्वेतवर्णो ब्राह्मणः , रक्तवर्णः क्षत्रियः , पीतवर्णो वैश्यः , कृष्णवर्णः शूद्रः । छन्दस्सु गायत्री ब्राह्मणः , त्रिष्टुप् क्षत्रियः, जगती वैश्यः, अनुष्टुप् शूद्रः । शरीरावयवेषु-मस्तकं ब्राह्मणः, हस्तौ उरश्च क्षत्रियः, उदरं वैश्यः, पादौ शूद्रः । सवनेषु-

प्रातःसवनं ब्राह्मणः, माध्यन्दिनं सवनं क्षत्रियः, सायंसवनं वैश्यः, रात्रिः शूद्रः । स्वरेषु—उदात्तो ब्राह्मणः, अनुदात्तः क्षत्रियः, स्वरितो वैश्यः, विकस्वरः शूद्रः । तदित्थं—पूर्वोक्तैर्निदर्शनैश्चातुर्वर्ण्यस्य सर्वव्यापकत्वम्,ईश्वरप्रणीतत्वेन सर्वथा नित्यत्वं के नाम न शास्त्रविदो मन्यन्ते । अत एव च व्यक्तिविशेषस्योल्लेखनमकृत्वा सामान्यरूपेणैव भगवता—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इत्युक्तम् ।

येऽपि पाश्चात्त्याः, ये च यवनास्तेष्वपि प्रकारान्तरेण एषा व्यवस्था वर्त्तत एव । युनान (Greece) देशस्थेन पाश्चात्त्यदेशेषु सुप्रसिद्धस्य सुकरात (Soceretes) महोदयस्य प्रियतमेन प्रधानेन च शिष्येण वेदान्तशिरोमणिना (Philosophers) प्लेटो (Plato) महाशयेन गार्जियन, वारियर, आर्टिजन, लेबरर, इत्येवं रूपेण वर्णविभागः स्वीकृतः । ते चैते विभागास्तत्र साहित्ये—क्लर्जी (Clergy) सोल्जर (Soldier) मर्चेन्ट (Merchant) लेबरर (Labourer) एवं सिविलमैन, (Civil Man) मिलिट्रीमैन (Military Man) आर्टमैन (Art Man) लेबररमैन-(Labourer Man) इत्यादिविभिन्ननामभिः प्रसिद्धाः ।

यथा भारतीयैर्वर्णव्यवस्था नित्या स्वीक्रियते तथैव प्लेटोमहोदयेनापि तस्या नित्यत्वमेवोक्तम् । स कथयति—

‡*Whether the Soul has three principles of life.?*

*Certainly it has. The three principle divisions of society, that we practically see in the world, can be but the reflection of the Soul itself*

अग्रे च—स दार्शनिकशिरोमणिः—

"सहजं कर्म्म कौन्तेय ! सदोषमपि न त्यजेत्"

"स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः"

इति भारतीयसिद्धान्तमभिलक्ष्य आह—

+*But when the Cobbler is any other man whom nature designed to be a trader having his heart lifted up by wealth or strength or the number of his followers, or any like advantage, attempts to force his way into the class of warriors, or a warrior into that of legislators and guardians, for which he is unfitted, and either to take the implements of the duties of the other, or when one man is trader, legislator and warrior all in one; then this interchange and thus meddling of one with another is the ruin of the state*

*It is necessary for good administration in a State that all people should do their own business and they should not be allowed to inter meddle with one another.*

‡ क्या आत्मा की तीन प्रकार की प्रकृतिएं होती हैं ? क्यों नहीं । यदि समाज में तीन प्रकार के विभाग हैं तो यह अवश्य ही प्रकृति के तीन विभाग होंगे । क्यों कि समाज में यह तीनों गुण व्यक्तियों के गुणों से हीआते हैं"—

+ जब ऐसा व्यक्ति जो प्रकृति के अनुसार आर्टिजन प्रवृत्तिका है घने घमण्डमें आकर वारियर श्रेणि में प्रविष्ट होना चाहता है, जब वारियर अपनी ऊची श्रेणी के योग्य न होता हुआ सिनेटर श्रेणिमें आना चाहता है इसप्रकार जब एकही व्यक्ति सब कम करना चाहता है तब समाजमें दुर्व्यवस्था फैलजाती है । किसीभी राज्यमें सुशासन होनेके लिए आवश्यक है कि भिन्न भिन्न व्यक्तियों को अपने अपने धर्म्ममें ही लगाया जाय और अव्यवस्था न होने दी जाय"—

पाश्चात्यशिक्षानुयायिनां भारतीयानां नेत्रपटल-विकासाय पाश्चात्यविदुषो वर्णव्यवस्थायां ये विचारास्ते प्रसङ्गाभावेप्युक्ताः। पुनः प्रकृतमनुसरामः।

भारतीयसमाजशास्त्रिप्रवरैः समाजव्यवस्थापनार्थं ब्रह्मक्षत्रविड्वीर्येण कृतात्मनां द्विजातीनाम्, पूषप्राणेन निर्म्मितानां च शूद्रमहाभागानां विभागः कृत। समाजे खलु वर्त्तते आवश्यकतास्य वर्णाश्रमधर्म्मविभागस्य। यतो हि ये दुर्गुणाः समाजेऽज्ञानवशादुत्पद्यन्ते, तेषां निवारणार्थमपेक्षते कश्चिद् उपदेष्टृसमुदायः, यस्य शास्त्रविहितसदुपदेशेन शरीरावच्छिन्नान्तःकरणस्य दोषा निवृत्ता भवेयुः। एषा रक्षा अन्तःकरणजन्यदोषनिवृत्तौ साधनभूता प्रत्येतव्या। एवमेव समाजोपरि यच्छत्रूणामाक्रमणं जायते, तस्य निरोधार्थमप्यपेक्षते कश्चिद्रक्षकः समुदायः यो हि अहर्निशं शत्रुनाशे प्रवृत्तः सन् समाजरक्षां कुर्यात्। एवमेव च समाजपरिपालनार्थम्—अर्थात् समाजस्योदरचिन्तानिवृत्त्यर्थमप्यपेक्षते कश्चित् समुदायविशेषः। यो हि पूर्वोक्तेन उपदेशकेन, रक्षकेण च उपदिष्टो रक्षितश्च भूत्वा अन्नाद्युत्पादनार्थं कृष्यादिक वाणिज्यादिकं च कुर्यात्। एवमेव च येन समुदायेन कृष्यादिकं क्रियते, तत्र कृष्यादिकरणसमये पश्वादीनां क्षेत्रविनाशाय भवति यदाक्रमणम्, तन्निरोधार्थमप्यपेक्षते कश्चित् समुदायविशेषः। एष एव समुदाय उपदेशकवर्गस्य रक्षकवर्गस्य च बहिरङ्गकर्म्मण्यपि नियुक्तो द्रष्टव्य'। अर्थात् पूर्वोक्तानां समाजानां कृते सेवार्थमप्यपेक्षते कश्चित् समुदायविशेषः। एवं च—समाजव्यवस्थापनार्थं पूर्वोक्तश्चातुर्वर्ण्यविभागा नितान्तमावश्यक.। अन्यथा अव्यवस्थितत्वात् समाजोच्छेदापत्तिः स्यात्। तदित्थमुपर्युक्तं समाजविभागं लोककल्याणार्थं प्रधानसाधनं विचिन्त्य प्राक्तनमहामहर्षिभिरेष विभागः कृतः। तैरेव च महर्षिभिस्तस्य विभागचतुष्टयस्य प्रकृतिविज्ञानानुसारं ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्र इत्येवंरूपेण जातिसंज्ञा निर्दिष्टा। तत् परिचयार्थं च शर्म्मा, वर्म्मा, गुप्तः, दासः-इति शब्दाः संकेतिताः।

यथा हि—शरीरस्यान्तरङ्गभागानां रसासृङ्मांसादीनां रक्षायां 'चर्म्म' एव साधनभूतं भवति। ज्ञानशक्तियुतो ब्राह्मणश्च समाजशरीरस्यान्तरङ्गरक्षायां नियुक्तः सन् चर्म्मस्थानीयः। अतस्तस्य ब्राह्मणसमुदायस्य 'शर्म्म' शब्देन संकेतो विहितः। पुरा वैदिककाले चकारस्य स्थाने शकारस्योच्चारणं प्रचलितमासीत्। अर्थात् 'चर्म्मशब्दस्थाने' 'शर्म्म' इत्युच्चारयन्ति स्म देवपदभाजो महर्षयः। संस्कृतभाषायां प्रचलितश्चर्म्मशब्दः 'छन्दोभ्यस्ते,ति नाम्ना प्रसिद्धायां वेदभाषायां शर्म्मरूपेण प्रचलित आसीद्, वर्त्तते च। दर्शपूर्णमासेष्टौ पुरोडाशसंपादनाय हविःपेषणार्थं कृष्णमृगचर्म्मण आदानं क्रियते। तत्रोक्तं वाजसनेयश्रुतौ-

"अथ कृष्णाजिनमादत्ते—शर्म्मासीति।
चर्म्म वा एतत् कृष्णस्य। तदस्य तन्मानुषम्।
शर्म्म देवत्रा"—(श० ब्रा० १।१।४।१) इति।

देवत्रा अर्थात् देवाधीनम्, देवभाषायां व्यवहृतमिति यावत्।

एवमेव च यथा शरीरस्य बहिरङ्गाक्रमणरक्षा वर्म्मणा (कवचेन) क्रियते, तद्वत् क्रियाशक्तिमतः क्षत्रियस्य बहिरङ्गभूतानां शत्रूणां विनाशे साधनभूतत्वात् तस्य वर्म्मशब्देन संकेतः। एवमेव—चर्म्मणा वर्म्मणा च यथा शरीरं सुरक्षितं सत् सुगुप्तं भवति. तथैव अर्थशक्तिमतो वैश्यस्य समाजस्वरूपशरीरस्थानापन्नत्वात्-चर्म्मवर्म्मरूपाभ्यां ब्राह्मणक्षत्रियाभ्यां सुरक्षितत्वात् तस्य 'गुप्तः' इति संकेतः कृतः। इदमेव संकेतरहस्यमभिलक्ष्य नामप्रकरणे उक्तं मनुस्मृतौ, यमस्मृतौ, विष्णुस्मृतौ च—

१ शर्म्मवद् ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंयुतम्।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः॥१॥
विष्णुः—

२ शर्म्मवद् ब्राह्मणस्य स्याद् राज्ञो रक्षासमन्वितम्।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥२॥
मनुः—

३ शर्म्म देवश्च विप्रस्य, वर्म्म त्राताश्च भूभुजः।
भूतिदत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥३॥
यमः—

अपि च शरीरे यथा मुखेनोच्यते, हस्तेन च दंशमशकादिकाः शत्रवस्ताड्यन्ते, उदरेण च शरीरस्थितिरक्षार्थमन्नादिपाचनस्य व्यापारः क्रियते, पद्भ्यां च चलनादिक्रियया उपरिभागस्थस्य शरीरस्य सेवा क्रियते, तथैव पूर्वोक्तचतुष्टयस्य शरीरोक्तव्यवस्थातुल्यत्वमवधेयम्। एतदेवाभिप्रेत्य भगवती श्रुतिराह—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत॥"
(यजुः सं० ३१।५)

एतदेवाभिप्रेत्य भगवता मनुनाप्युक्तम्—

"लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्त्तयत्"॥

एवं च यथा समाजव्यवस्थापनार्थमेष चातुर्वर्ण्यविभागः कृतस्तथैव तस्य विभागस्य स्वरूपरक्षार्थं तत्तत्समुदायस्य आचारा व्यवहारा अपि भिन्ना भिन्ना एव विहिताः।

अन्यथा यदि सर्वेषां तुल्या एवाचारादिधर्म्मा भवेयुस्तदा तु समानव्यवहारेण निष्पन्नानां वाक्प्राणमनसामपि समानरूपत्वाद्, एतादृशैरेकजातीयैर्वाक्प्राणमनोभिरुपदेशादिकानि भिन्नानि कार्याणि कथमपि न भवेयुः। यतः खलु उपदेशशक्तिः मस्तिष्कशक्ताववलम्बिता। एवं च यस्य मस्तिष्कशक्तिर्यादृशी दृढा भवति,तस्योपदेशशक्तिरपि तादृश्येव दृढा भवति। एवमेव युद्धं खलु साहसं हृदयबलं चापेक्षते। अतो हृदयबलं यादृक् साहसयुक्तं भविष्यति, शत्रुविनाशविधौ तथाविध एव स समर्थो भविष्यति। एतच्च खलु भिन्नभिन्नशक्तिसामर्थ्यं भिन्नभिन्नपदार्थाधीनम्। यथा हि केचित् पदार्था मस्तिष्कशक्तिं वर्धयन्ति, केचिच्च हृदयबलम्। एवमेव केचित् पदार्था मस्तिष्कशक्तिं नाशयन्ति, केचिच्च हृदयबलम्। यथा हि मद्यादिका ये तामसभावोपेताः पदार्था सन्ति, सन्ति ते मस्तिष्कशक्तिविनाशकाः। परन्त्वेते एव पदार्थाः प्रायः मात्रया सेवनेन हृदयबलप्रवर्द्धका जायन्ते। एतदेवाभिप्रेत्य भगवता चरकेण मद्यस्य हृदयशक्तिप्रवर्द्धका नानागुणा उक्ताः। एतदेवाभिप्रेत्य च भगवता मनुना बुद्धिनाशका ये पदार्थाः सन्ति, ते निषिद्धाः। तथा चोक्तम्—

लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च॥
(मनुः ५।५)

तस्माद्-उपदेशशक्तिमतो ब्राह्मणवर्णस्य मस्तिष्कशक्तिसंरक्षकाः सात्त्विका एव आचारा व्यवहारा उपयुक्ता भवन्ति। एवमेव च रक्षकस्य क्षत्रियवर्णस्य हृदयबलसंरक्षकाः सात्त्विकराजसा एव आहारा व्यवहारा उपयुक्ता भवन्ति। वैश्यस्य तु अर्थशक्तिरक्षका राजसतामसाः। शूद्रो यथाचारी यथाकामः। तस्माद् एतेषां ब्राह्मणादिवर्णानां भिन्ना एव धर्म्मा भवितुमर्हन्तीति के नाम न मन्येरन्। न च वाक्प्राणमनोमयात्मोपरि आहारादेः प्रभावो न भवतीति वाच्यम्, श्रुतिविरोधात् प्रत्यक्षविरोधाच्च। सात्त्विकराजसतामसभावादियुक्तपदार्थभक्षणेन तथाविध एव वाक्प्राणमनसामुपरि प्रभावो जायते-इति स्पष्टमेव छान्दोग्यश्रुतौ प्रतिपादितम्। तथा हि आमनन्ति छन्दोगाः—

"अन्नमशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसम्, योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते। तासां यः स्थविष्ठो धातुस्तन्मूत्रम् यो मध्यमस्तल्लोहितम्, योऽणिष्ठः स प्राणः। तेजोऽशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तदस्थि, यो मध्यमः सा मज्जा, योऽणिष्ठः सा वाक्। अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्"

(छां० उ० ६ प्र० ५ खं० १-२-३-४ कं०) इति।

तस्मात् समाजरक्षार्थं यथा चातुर्वर्ण्यविभाग आवश्यकस्तथैव चातुर्वर्ण्यरक्षार्थं धर्म्मभेदा अप्यावश्यका एव।

'शूद्रान्त्यजस्पर्शादौ न हानिः ? सर्वे वर्णाः समानाः' 'सर्वेषां सर्वत्र समानाधिकारः' इत्येवं विवदमानाः पश्यन्तु तावच्छ्रौतप्रमाणानि धर्म्मभेदमूलानि।

ज्योतिष्टोमापरपर्य्यायके सोमयागे दीक्षितो व्रती यजमानः साक्षाद्देवमूर्त्तिर्भवति। यावदनु स दीक्षितो भवति तावदनु शूद्रेण (सच्छूद्रेणापि) सह तस्य भाषणमपि निषिद्धम्, का कथा स्पर्शस्य। तथा चोक्तम्—

"तन्न सर्व-इवाभिप्रपद्येत, ब्राह्मणो वैव, राजन्यो वा, वैश्यो वा। ते हि यज्ञियाः। स वै न सर्वेणेव संवदेत। देवान्वा एष उपावर्त्तते यो दीक्षते। स देवतानामेको भवति। न वै देवाः सर्वेणेव संवदन्ते। ब्राह्मणेन वैव, राजन्येन वा, वैश्येन वा। ते हि यज्ञियाः। तस्माद्यद्येनं शूद्रेण संवादो विन्देत्—एतेषामेवैकं ब्रूयात् 'इममिति विचक्ष्व, इममिति विचक्ष्व। एष उ तत्र दीक्षितस्योपचारः" (शत० ३।१।१।७) इति।

अपि च—"असतो वा एष सम्भूतः, यच्छूद्रः" (तै ब्रा. ३।२।३।६) "अनृतं स्त्री, शूद्रः श्वा, कृष्णः शकुनिः (काकः)। तानि न प्रेक्षेत"। (शत० ब्रा० १४।१।१।३१)।

इत्यादिभिः स्पष्टमेव शूद्राणां द्विजातिधर्म्मेभ्यो बहिष्कारो दृश्यते। दर्शनमपि शूद्रस्य परिहृतं श्रुत्या।

'यज्ञेषु शूद्राणामप्यधिकारो द्विजातिवत्' इति मन्यमानाः साहसिका अवलोकयन्तु तावद् यज्ञमर्य्यादारहस्यं 'ते हि यज्ञियाः (न शूद्रः)' इत्यादि-वचनेभ्यः। यज्ञेषु द्विजातीनामपि नियताधिकारित्वमेव दृश्यते तत्र तत्र ब्राह्मणग्रन्थेषु। तथा हि–'राजा वै राजसूयेनेष्ट्वा भवति सम्राड् वाजपेयेन। अवरं हि राज्यं, परं साम्राज्यम्' (शत०ब्रा० ६।१।१।१२) इत्युक्त्वा राज्ञ एव खलु राजसूये अधिकारो न ब्राह्मणादेः। वाजपेयस्तु ब्राह्मणस्यैव यज्ञो न राज्ञः, इति तत्र स्पष्टमेव यज्ञियधर्म्मभेदः प्रतिपादितः। तथा हि—

'स वै ब्राह्मणस्यैव यज्ञः, यदेनेन बृहस्पतिरजयत। ब्रह्म हि बृहस्पतिः। ब्रह्म हि ब्राह्मणः। राज्ञ एव राजसूयम्। राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन (ब्राह्मणः)। न वै ब्राह्मणो राज्याय अलम्। अवरं हि राज्यं, परं हि साम्राज्यम्" (शत० ५।१।१।१२)।

"स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्। आयुः प्राणं प्रजां पशुं कीर्त्तिं द्रविणं ब्रह्मवर्चसम्। मह्यं दत्वा-व्रजत ब्रह्मलोकम्"

(अथर्व० सं० ७।६।७१।१)

इत्यादिमन्त्रश्रुत्या वेदमातुर्गायत्र्याः सम्बन्धो द्विजातीनामेव केवलम्, इति स्पष्टमेव शूद्राणां यज्ञानधिकारित्वं व्यज्यते।

अपि च—यजुःसंहितायां महता समारम्भेण तत्तद्वर्णानाम्, सच्छूद्राणाम्, अवरवर्णानाम् नृत्त-शैलूष-भीमल-रेभ-कौलाल-कर्म्मार-मणिकार-धनुष्कार-ज्याकार-यातुधानानामसच्छूद्राणाञ्च धर्म्मभेदाः प्रतिपादिताः। तथा हि—

"ब्रह्मणे ब्राह्मणम्, क्षत्राय राजन्यम्, मरुद्भ्यो वैश्यम्, तपसे शूद्रम्, तमसे तस्करम्" इति।

(यजुः सं० ३०। अ०)

तदित्थं सर्वलोकव्यवहारसिद्धस्य, प्रमाणभित्तौ च प्रतिष्ठितस्य पूर्वोक्तधर्म्मभेदस्यावश्यकत्वं कथ निराकर्त्तुं शक्यते-इति त एव वेदाभिमानिनः प्रष्टव्याः।

चातुर्वर्ण्यरक्षकोऽयं पूर्वोक्तो धर्म्मभेदः काल्पनिकः, अवैज्ञानिकः अवैदिकश्चेति वदतां महानुभावानां संतोषः सम्यक् प्रकारेण जात इति मन्ये।

"नाकारणं हि शास्त्रेऽस्ति धर्म्मः सूक्ष्मोऽपि जाजले।
कारणाद्धर्म्ममन्विच्छन् स लोकानाप्नुते शुभान्॥"

इति भगवदुक्त्यनुसारेण अस्माकं सर्वे एव धर्म्मादेशा वैज्ञानिकाः प्राकृतिकाः, अत एव नित्याः, अत एव च सर्वथा अपरिहार्य्याः।

नूतनसभ्यतामुत्तमां वैज्ञानिकीं मन्यमाना ये नूतनसभ्यताभाजः सभ्याः—भारतवर्षीयप्राचीनतमसभ्यताविषये विज्ञानशून्यत्वम्, लेखनादिपरिपाटीराहित्यम्, एवमन्यानि दूषणानीति दोषाणामारोपणं कुर्वन्ति, तत्तेषां भारतवर्षीयविज्ञानगहनाटवीप्रवेशाभावमूलिका भ्रान्तिरेवेति निःसन्दिग्धं ब्रूमः। प्राचीनसमये भारतवर्षे महर्षिवर्य्यैर्यद् वैज्ञानिकतत्त्वानामन्वेषणं कृतं तस्य अद्यापि महर्घता विचारवद्भिर्विनिश्चेतुं शक्यते। नैतन्मया निर्म्मूलमेवोच्यते अपि तु दृष्टान्तरूपेण भवतां समक्ष किञ्चिदुपस्थाप्यते। दर्श्यते च तेषां सर्वजनोपकारिणी वैज्ञानिकी चमत्कृतिः। समयाभावाल्लघुकायेऽस्मिन्निबन्धे अधिकं वक्तुं न शक्नोमि। केवलं प्राचामन्वेषणनिपुणतायाः किञ्चिदिव निदर्शनं प्रस्तौमि। मन्ये नैतद्रुचिकरं भवेद् भवताम। इतरजलापेक्षया गङ्गातोये को विशेषः? तत्र स्नानकरणेन कथं मोक्षलाभः? कथं चैषा भगवतीभागीरथी त्रिपथगा, विष्णुपदी ब्रह्मद्रवी इत्यादिशब्दैर्व्यवह्रियते? अस्मिन्निदर्शने एतेषामेव प्रश्नानां समाधानाय प्रयत्नः क्रियते।

सप्तवितस्तिकायात्मकेऽस्मिन् खलु महाब्रह्माण्डे सन्त्याध्यात्मिकाधिभौतिकाधिदैविकानि त्रीणि मण्डलानि। तत्राधिदैविकप्रपञ्चेन आधिभौतिकस्योत्पत्तिर्जायते। आधिभौतिकाधिदैविकसम्मिश्रणेन च अध्यात्मप्रपञ्चस्य विकासो भवति। उपर्युक्तेषु त्रिष्वेतेषु मण्डलेषु मूलभूतमाधिदैविकं मण्डलं पञ्चमण्डलात्मकमस्ति। अत एव सर्वमिदं वस्तुजातं प्रपञ्च इत्याख्यायते। आधिदैविकान्तर्गतानि तानि पञ्चमण्डलानि प्राणः, आपः, वाक्, अन्नम्, अन्नादः, इत्येतैः शब्दैः प्रसिद्धा विज्ञानसमये। अस्ति खलु सर्वजगद्व्यापकः शब्दस्पर्शरूपरसगन्धरहितः, अत एव अधामच्छत् कश्चिन् मौलिकतत्त्वविशेषः सर्वसृष्टिप्रवर्त्तकः।

तमेतं मौलिकं तत्त्वं प्राणशब्देन, कि वा ऋषिशब्देन व्यवहरन्ति महर्षयः। तथा चोक्तं वाजसनेयश्रुतौ—

> असद्वा इदमग्र आसीत्। तदाहुः-कि तदसदासीदिति? ऋषयो वाव तदग्रेऽसदासीदिति। तदाहुः-के ते ऋषय इति? प्राणा वा ऋषयः। ते यत् पुराऽस्मात् सर्वस्मादिदमिच्छन्तः श्रमेण तपसा 'अरिषँस्तस्माद् ऋषय' इति।
> (शत० ब्रा० ६।१।१।१)

'असद्वेदमग्र आसीत्०' इत्यस्यायमर्थः—इदमग्रे अर्थात् इदमितिनिर्देशेन व्यवह्रियमाणायाः सृष्टेः प्राग् असदात्मकः सर्वजगत्प्रभवप्रतिष्ठापरायणभूतः कश्चित् तत्त्वविशेष आसीत्। स एव प्राणः। यस्मिन् वस्तुनि प्राणो वसति तद् वस्तु 'सत्' शब्देनोच्यते। 'सामान्ये सामान्याभावः' इति न्यायानुसारेण मनुष्यत्वे यथा मनुष्यत्वाभावः, घटत्वे यथा घटत्वाभावः, तथैव सत्स्वरूपसंपादके प्राणे प्राणाभाव। अत एव तमेतं प्राणतत्त्वमसदित्याचक्षते विद्वांसः। एषैव देवपदभाजां विदुषां परोक्षप्रियता। 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' इति नैगमिका आहुः।

तदिदं महाब्रह्माण्डे—असदात्मकं प्रथमं प्राणमण्डलं नाम। तदेव च प्राणमण्डलं 'स्वयम्भूमण्डलम्' इत्याचक्षते वैज्ञानिकाः। एतेनैव प्राणात्मकेन जगन्निर्म्मात्रा स्वयम्भुवा सर्वप्रथममबुत्पत्तिः क्रियते। विजातीयानन्तप्राणेषु केन्द्रे घर्षणादबुत्पत्तेश्च घर्षणाधीनत्वाद् एतेभ्यो ऋषिप्राणेभ्य आपोधाराः सर्वतः प्रस्रवन्ति। स एष ऋषिप्राणः—आप्यप्राणादिवन्न केनचिदुत्पाद्यते, अपि तु स्वयमेवोत्पद्यते अतः स्वयं भवतीति व्युत्पत्त्या एष ऋषिप्राणः स्वयम्भूशब्देनाख्यायते। इत्थं च सर्वप्रथमं प्राणात्मकेन स्वयम्भुवा अबुत्पत्तिरेव क्रियते। एतदेवाभिप्रेत्य भगवान् मनुराह—

ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥१॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥२॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥३॥मनुः।

ब्रह्मनिःश्वसितवेदः, ब्रह्मस्वेदवेदः, यज्ञमातृकवेदः, इति कृत्वा वेदतत्त्वं चतुर्द्धा विभक्तं द्रष्टव्यम्। एतदेवाभिप्रेत्य 'चतुष्टयं वा इदं सर्वम्' इत्याहुः। तत्र स्वायम्भुवो वेद एव ब्रह्मनिःश्वसितवेदः। वेदः खलु ऋक्-साम यजुरितिकृत्वा त्रेधा विभक्तः। ऋक् छन्दोवेदः, साम वितानवेदः, यजुश्च रसवेदः। प्रकारान्तरेण ऋङ् मूर्त्तिः, यजुर्वेदो गतिः, साम तु तेजः। तथा चोक्तं कृष्णश्रुतौ—

"ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः
सर्वा गतिर्याजुषी हैव शश्वत्।
सर्वं तेजः सामरूपं ह शश्वत्
सर्वं हीदं ब्रह्मणा हैव सृष्टम् ॥"
(तै० ब्रा० ३।१२।६।१) इति।

यजुश्च स्थितिगत्यात्मको वेदः। यद्-भावो गतितत्त्वम्। जूभावश्च स्थितितत्त्वम्। यच्च जूश्च यज्जूः। यज्जूरेव परोक्षप्रियाणां देवानां समये यजुः। ऋक्-सामे वयोनाधे। यजुश्च वयः। 'ऋक्सामे यजुरपीतः' (शत० १०) इति हि अग्निरहस्यविद आहुः। यजुषा एव सर्वा सृष्टिर्विधीयते। उक्तं पूर्वं-यद्भावो गतिः। सैषा गतिर्वायुरेव। स्थितिभावश्च आकाशः। तथा चोक्तं श्रुतौ—

"अयं वाव यजुर्योऽयं पवते। एष हि यन्नेवेदं सर्वं जनयति। एतं यन्तमिदमनु प्रजायते। तस्माद् वायुरेव यजुः। अयमेवाकाशो जूः—यदिदमन्तरिक्षम्। एतं ह्याकाशमनु जवते। तदेतद्यजुर्वायुश्चान्तरिक्षञ्च। यच्च जूश्च। तस्माद्यजुः। तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितम्। ऋक्सामे वहतः"-(शत० ब्रा० १०।३।५।१) इति।

तत्र यजुर्वेदे आकाशः-अमृतमृत्युभेदाद् द्विविधः। अमृताकाश इन्द्रः। तमेतमेवेन्द्रं 'शुनं हुवेम मघवानमिन्द्रम्'(ऋक्सं.)इत्यादिरूपेण निरूपयन्ति महर्षयः। 'नेन्द्रादृते पवते धाम किञ्चन'इति मन्त्रवर्णाद् अमृताकाशात्मक एष इन्द्रः सर्वव्यापकः। एष एव वैज्ञानिकानां समये सुन्दर-सुदर-सुत्थर--सुथरा--इति क्रमवत् क्रमेण इन्द्रः—इन्दरः—इत्थरः—एवं रूपेण परिवर्त्तमानः 'ईथर' नाम्ना प्रसिद्धोऽभूद् इत्यनुमन्ये। तेनैतेनामृतमयेनेन्द्रेण सह नित्यं सम्बद्धो मर्त्याकाशो वागनाम्ना प्रसिद्धः। सैषा वाक् इन्द्रपत्नी। 'तस्यैतस्याग्नेर्वागेवोपनिषत्' इति श्रुत्या मर्त्या वाग्-अग्निमयी। स एष अग्निर्त्रेदाग्निः। यत्स्वरूपस्य वायोर्व्यापाराद् एष वाङ्मयोऽग्निरेवांशात्मना द्रुतो भूत्वा अब्-रूपतां भजते। एतदेवाभिप्रेत्य उक्तं चयनप्रकरणे शतपथब्राह्मणे—

"प्रतिष्ठा ह्येषा यद् ब्रह्म । तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत । सोऽपोऽसृजत वाच एव लोकात् । वागेव साऽसृज्यत । सा इदं सर्वमाप्नोद्यदिदं किञ्च । यदाप्नोत्तस्मादापः । यदवृणोत् तस्माद् वाः"-(शत० ब्रा० ६।१।१।७।८)

अलमतिप्रपञ्चितेन । उपर्युक्तानां सर्वेषां विषयाणां विशदनिरूपमीशोपनिषद्भाष्ये द्रष्टव्यम् । साम्प्रतं त्विदमेव वक्तव्यम्-यद् वेदवाचा सर्वप्रथममबुत्पत्तिरेव क्रियते । सैषा वेदवागेव सर्वेषां जननी । एतदेवाभिप्रेत्योक्तं मनुना—

"सर्वेषां तु स नामानि कर्म्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे ॥
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भवच्चैव सर्वं वेदात्प्रसिध्यति ॥"इति ।

तदिदं द्वितीयमापोमण्डलं नाम । एतदेव परमेष्ठिशब्देनोच्यते । ततश्चापां घर्षणेन तस्मिन्नापोमये सरस्वन्नामके महासमुद्रे अप्परमाणवो यज्ञवराहमूर्त्तिना वायुना क्रमेण घनीभूताः सन्तः समुद्रकेन्द्रे प्रज्वलिता भूत्वा मण्डलाकारतां भजन्ते । इदमेवाग्निपिण्डमभिप्रेत्य मनुना 'तासु बीजमवासृजत्' इत्युक्तम् । तदिदं तृतीयं वाङ्मण्डलं नाम । सूर्य्यमण्डलात्मिकया अनयैव वाचा ऋग्यजुःसामात्मिकायास्त्रयीविद्यायाः प्रादुर्भावो जायते । स एष ब्रह्मनिःश्वसितवेदाद् भिन्नो गायत्रीमातृको वेदः । वेदोपादानतयैवैषा सौरी वाग् वेदानां माता उच्यते । तदुक्तं कृष्णश्रुतौ—

वागक्षरं प्रथमजा ऋतस्य वेदानां माताऽमृतस्य नाभिः ।
सा नो जुषाणोपयज्ञमागादवन्ती देवी सुहवा मेऽस्तु ॥
(तै० ब्रा० २।८।८।५) इति

एतदेवाभिप्रेत्य ब्राह्मणश्रुतावप्युक्तम्—

"सा या सा वाक्—असौ स आदित्यः । स एष मृत्युः । तस्माद्यत् किञ्चार्वाचीनमादित्यात् सर्वं तन्मृत्युनाप्तम् । यदेतन्मण्डलं तपति तन्महदुक्थम् । ता ऋचः । स ऋचां लोकः । अथ यदेतदर्चिर्दीप्यते तन्महाव्रतम् । तानि सामानि । स साम्नां लोकः । य एष एतस्मिन् मण्डले पुरुषः सोऽग्निः । तानि यजूंषि । स यजुषां लोकः । सैषा त्रय्येव विद्या तपति । तद्धैतदविद्वांस अप्याहुः—त्रयी वा एषा विद्या तपतीति"—
(शत० ब्रा० १०।५।२।३) इति ।

तदनन्तरं सौररश्मिवर्षणात् पुनः द्वितीया आप उत्पद्यन्ते । ता एताः सूर्य्यरश्मिवर्षणाद् उत्पन्ना वेनरूपेण 'सोलरसिस्टम्' नाम्ना प्रसिद्धे सूर्य्यसंस्थामण्डले व्याप्ता आपः-मरीचय उच्यन्ते । 'अम्भः' इति नाम्ना प्रसिद्धाः पारमेष्ठ्यापो यथा गङ्गारूपे परिणता भवन्ति, एवमेव एता मरीचयो यमुनास्वरूपे परिणता भवन्ति । चाक्षुषकृष्णनाम्ना प्रसिद्धस्य सौरकृष्णस्य यमुनया सह नित्यसम्बन्धः । गङ्गायाः विष्णोः सकाशात् सम्बन्धः । तस्मिन्नेतस्मिन् सौरमण्डलस्थे अर्णवनाम्ना प्रसिद्धे अपां समुद्रे रुद्राग्निप्रवेशाद् रासायनिकप्रक्रियाद्वारा क्रमशः-आपः-फेनः-उषः-सिकता- शर्करा-अश्मा अयः-हिरण्यमित्यष्टव्याहृत्यात्मकं पृथिवीमण्डलमुत्पद्यते । अर्थाद्-अपग्निसंयोगाद्-अपां शैत्यनाशाद् अग्नेश्च तापक्षयात् तृतीयमनुष्णाशीतं द्रव्यमुत्पद्यते । तदेव पृथिवीमण्डलमुच्यते । यतो हि पृथिवी अप्फेनादिभेदेन अष्टव्याहृत्यात्मिका । अत एव 'अष्टाक्षरा वै गायत्री' इति शब्दरूपगायत्रीछन्दःसादृश्यात् पृथिवीमण्डलमपि 'गायत्री' शब्देनाचक्षते वैज्ञानिकाः । तथा चोक्तं साविश्रेनिब्राह्मणे शतपथे—

'देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे । तान् स्पर्द्धमानान् गायत्री अन्तरा तस्थौ ।

या वै सा गायत्री आसीत्—इयं वै सा पृथिवी। इयं ह्रैव तदन्तरा तस्थौ'-इति। (शत० १।४।३।२३)

पृथिवीगर्भस्थोऽमृताग्निरेव अन्तरिक्षे सर्वतो व्याप्तं सोमात्मकमन्नं भक्षयति। एतेनैव च सोमाहुतिस्वरूपयज्ञेन केन्द्रे प्रतिष्ठितः सन् अमृताग्निरूपो भगवान् प्रजापतिः अस्य पृथिवीमण्डलस्य रक्षां करोति। एतं केन्द्रस्थं प्रजापति विज्ञानपाथोधितलावगाहिनो विद्वांस एव ज्ञातुं समर्था भवन्ति न तु साधारणाः। तथा ह्युक्तं पूर्वम्—

तस्य योनि परिपश्यन्ति धीरा-
तस्मिन्ह तस्थुर्भुवनानि विश्वा' इति।

यतः खलु पृथिवीपिण्डस्थोऽमृताग्निस्वरूपः प्रजापतिः सोमान्न भक्षयति, अत एवेदं पृथिवीमण्डलं शरीरशारीरयोरभेदाद् अन्नादमण्डलमुच्यते। य खलु भोक्ता भवति, स एवैष वैदिकभाषायामन्नादशब्देन प्रसिद्धः। तदिदं चतुर्थमन्नादमण्डल नाम। तदनन्तरञ्च पृथिवीमण्डलस्थाद् अत्रिनेत्राद् अर्थात् पारदर्शित्वप्रतिबन्धकात्रिप्राणात् सोमस्योत्पत्तिर्जायते। तदुक्तं ब्रह्माण्डे—

ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः।
नेत्राभ्यामस्रवत् सोमो दशधा द्योतयन् दिशः॥१॥

'कोऽसौ अत्रिप्राणः? कथं च तेन सोमोत्पत्तिरित्येतत् सर्व गुहानिहितं रहस्य 'पुराणमीमांसायाम्' सुविशदं निरूपितमतस्तज्जिज्ञासुभिस्तत्रैव द्रष्टव्यम्। इत्थं चात्रिप्राणादुत्पन्नः सोम एवान्नमण्डलं नाम। स एवायमत्रिपुत्रश्चन्द्रमा। एष एवाग्नेरन्नम्। तथा हि—

"ते देवा अब्रुवन्—न वा इममन्यत् सोमाद्धिनुयात्। सोममेवास्मै सम्भराम। तस्मै सोमं समभरत। एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः"
(शत० ब्रा० १।६।४।४) इति।

तदिदं पञ्चममन्नमण्डलं नाम—

प्राणः प्रजापतिः स्वयम्भूः। आपः परमेष्ठी विष्णुः। वाग् इन्द्रः सूर्य्यः। अन्नादोऽग्निः। अन्नं सोमः। ता एता एव देवता दर्शपूर्णमासयज्ञेन सर्वमभवत्। एतदेवाभिप्रेत्य दर्शपूर्णमासयज्ञरहस्ये उक्तम्—

"ता वा एताः प्रजापतेरधिदेवता असृज्यन्त—अग्निरिन्द्रः सोमः-परमेष्ठी-प्राजापत्यः। स आपोऽभवत्। आपो वा इदं सर्वम्। ता यत् परमे स्थाने तिष्ठन्ति तस्मात् परमेष्ठी नाम। स प्राणोऽभवत्। प्राणो वा इदं सर्वम्। यद्वै किञ्च प्राणि स प्रजापतिः। सा वागभवत्। वाग्वा इदं सर्वम्। तस्मादाहुरिन्द्रो वागिति। अन्नाद एवाग्निरभवत्, अन्न सोमः। अन्नादश्च वा इदं सर्वमन्नं च। ता वा एताः पञ्च देवता एतेन कामप्रेण यज्ञेनायजन्त" इति।
(शत० ब्रा० ११।१।६)

अथ भावः—स्वयम्भूः-परमेष्ठी-सूर्य्यः-पृथिवी-चन्द्रमा एतानि भौतिकपिण्डानि। स्वयम्भूराकाशः। परमेष्ठी वायुः। सूर्य्यस्तेजः। पृथिवी मृत्। चन्द्रमा आपः—'अप्स्वन्तरा सुपर्णो धावते दिवि' इति श्रुतेः। तत्र भूतपिण्डेषु क्रमशः ब्रह्मा-विष्णुः-इन्द्रः-अग्निः-सोमः-एता देवताः प्रतिष्ठिताः। ब्रह्मा प्राणमयः। विष्णुरापोमयः। इन्द्रो वाङ्मय। अग्निरन्नादः। सोमोऽन्नम्।

पञ्चानामप्येषां प्राणाब्वागादीनां समष्टिः, शब्दान्तरेण पञ्चभूतानां समष्टिः पुरुषेषु अव्ययपुरुषस्य, योगेषु च बुद्धियोगस्य प्रतिपादके विज्ञानप्रधाने गीताशास्त्रे 'क्षर' शब्देन प्रसिद्धा। पञ्चात्मकं भूतप्रपञ्चमेव क्षरः पुरुषः। सोऽयं प्रथमः पुरुषः। तदाधारभूतो ब्रह्मेन्द्रविष्ण्वग्निसोमात्मकः, सांख्यदर्शने अव्यक्तनाम्ना प्रसिद्धः, शारीरकदर्शने च सेतुनाम्ना प्रसिद्धः, स-

र्वज्ञः, सर्वशक्तिः, सर्ववित्-अत एव सर्वसृष्टिप्रवर्त्तको द्वितीयोऽक्षरः पुरुषः। स एष मध्यमः पुरुषः। एवं सर्वाधारभूतः, अत एव—

"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत्"

इत्येवं रूपेणोपवर्णितः. आनन्द-विज्ञान-मन-प्राण-वाग् भेदेन पञ्चकलस्तृतीयो अव्ययपुरुषः। स एष उत्तमः पुरुषः। सर्वाणि भूतानि क्षरः। स एव विश्वस्योपादानकारणभूतः। भूतकूटोपरि प्रतिष्ठितस्तत्वोऽक्षरः। स एष निमित्तकारणभूतः। एतयोरालम्बनं अव्ययपुरुषः। एतदेव त्रिपुरुषपुरुषात्मकं विज्ञानमभिलक्ष्य भगवानाह—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥१॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥

तत्र पञ्चकलात्मनः क्षरस्य या प्रथमा ब्रह्मकला तस्याः प्राणाक्षरेण सम्बन्धः। विष्णुना सह अपाम। इन्द्रेण सह वाचाम्। अग्निना पृथिव्याः। सोमेन-चान्नस्य। तदित्थं पञ्चाप्येतानि मण्डलानि ब्रह्ममण्डलम्, विष्णुमण्डलम् इन्द्रमण्डलम्. अग्निमण्डलं, सोममण्डलम्, इत्येतैर्नामभि' प्रसिद्धा जायन्ते। ब्रह्माक्षरमयं मण्डलं प्राणमयम्। विष्ण्वक्षरमयं परमेष्ठिमण्डलमापोमयम्। इन्द्राक्षरमयं सूर्य्यमण्डलं वाङ्मयम्। अग्न्यक्षरमयं पृथिवीमण्डलमन्नादमयम्। एवं सोमाक्षरमयं चन्द्रमण्डलमन्नमयम्। इत्थं च प्राणाम्बुवागन्नादान्नात्मकानि स्वयम्भूपरमेष्ठिसूर्य्यचन्द्रपृथिवीत्येतानि यानि पञ्चमण्डलानि तेषां समष्टिरेव आधिदैविकं मण्डलमिति प्रत्येतव्यम्। एतेनैव मण्डलेन मर्त्यभावप्रधानस्य पृथिव्यप्तेजोवाय्वाकाशात्मकस्य आधिभौतिकमण्डलस्योत्पत्तिर्जायते। तत्र मण्डले स्वयम्भ्वादयः क्रमशः—गुहा-आपः-ज्योतिः-रसः-अमृतम्-इत्येतैर्नामभिः प्रसिद्धा भवन्ति। गुहा स्वयम्भूः। आपः परमेष्ठी। ज्योतिः सूर्य्यः। रसः पृथिवी। अमृतं चन्द्रमाः। एतयोराधिभौतिकाधिदैविकयोः संमिश्रणेनैवाध्यात्ममण्डलस्योत्पत्तिर्जायते। अध्यात्मप्रपञ्चे—अव्यक्तात्मा स्वयम्भूः, महानात्मा परमेष्ठी, विज्ञानात्मा-बुद्धिर्वा सूर्य्यः, प्रज्ञानात्मा मनो वा चन्द्रमाः, शरीरं पृथिवी। सर्वतोऽर्वाक् पार्थिवं शरीरम्, तत इन्द्रियाणि, तत इन्द्रियार्थाः। ततः परं चन्द्रात्मकं मनः। ततः सूर्य्यांशभूता विज्ञानात्मिका बुद्धिः। ततः पारमेष्ठ्यांशभूतो महानात्मा। ततः स्वयम्भुरूपमव्यक्तम्। ततः परं—आत्मक्षराक्षराव्ययरूपः षोडशी पुरुषः। नातः परं किञ्चिदस्ति। इदमेवाध्यात्मिकं क्रमिकविज्ञानं वर्णयता भगवता वेदपुरुषेणोक्तम्—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥१॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः॥२॥

एतेन इदमपि साधु संसिद्धं भवति-ये पदार्था आधिदैविके सन्ति त एव तथैव क्रमेण अध्यात्मप्रपञ्च निविष्टा। तदुक्तमुपनिषच्छ्रुतौ—

यदेवेह तदमुत्र यदमुत्र तदन्विह
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।
पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

पदार्थमात्रस्य मौलिकं तत्वं प्राणाः। त एव ऋषयः। तज्जन्याः पारमेष्ठ्याः सौम्याः प्राणाः पितरः। तज्जन्या आग्नेयप्राणा देवाः। आग्यप्राणाश्च असुराः, इति हि वैदिकी सामान्य परिभाषा। एतदेव पूर्वोक्तं प्राणाम्बुवागादिरूपं सृष्टिक्रमं उपवर्णयन् मनुराह—

ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः।
देवेभ्यश्च जगत् सर्वं चरं स्थाण्वनुपूर्वशः ॥
(मनुः )

पूर्वकथनेनेदं साधु संसिद्धं भवति-यत् प्राणमण्डलानन्तरम्,शब्दान्तरेण स्वयम्भूमण्डलानन्तरमस्ति द्वितीयं परमेष्ठिमण्डलं नाम। एष हि विष्णवक्षरसत्तया विष्णुनाम्ना प्रसिद्धः परमेष्ठी भगवान् सूर्य्य-ब्रह्माण्डादपि परमे स्थाने तिष्ठतीति कृत्वा परमेष्ठी शब्देनोच्यते। पञ्चस्वपि मण्डलेषु भिन्नभिन्नजातीयाः पदार्था उत्पद्यन्ते। उत्पन्नेभ्यस्तेभ्य एव पदार्थेभ्यस्तत्तन्मण्डलस्य स्थितिर्जायते। अत एवैते पदर्था 'मनोता' शब्देनाख्यायन्ते। तेषु तेषु पदार्थेषु तत्तन्मण्डलानां मनांसि ओतप्रोतानि भवन्ति, अत एव ता मनोताः कथ्यन्ते। तथा चोक्तं श्रुतौ—

"तिस्रो वै देवाना मनोताः। तस्यामेव तेषां मनांस्योतानि। वाग्वै देवानां मनोता। तस्यां हि तेषां मनांस्योतानि। अग्निर्वै देवाना मनोता। तस्यां हि तेषां मनांस्योतानि"
(ऐत० ब्रा० २।१०) इत्यादि।

तत्र प्रतिमण्डले मनोतात्रयमुत्पद्यते। वेदाः, सूत्रं, नियतिरिति तिस्रो मनोताः प्राणमये स्वयम्भूमण्डले उत्पद्यन्ते। भृगु-अङ्गिरा-अत्रिरिति तिस्रः आपोमये परमेष्ठिमण्डले। ज्योतिर्गौरायुरिति तिस्रो वाङ्मये सूर्ये। रेतः-श्रद्धा-यश इति तिस्रः अन्नमये चन्द्रमसि। वाग्-गौ-द्यौ-रिति तिस्रः अन्नादात्मके पृथिवी मण्डले। इत्थं पञ्चधा त्रीणि त्रीणि इति कृत्वा पञ्चदश सम्पद्यन्ते। नातोऽन्यत् किञ्चिदस्ति। अत एवोक्तं छान्दोग्य श्रुतौ—

यानिपञ्चधा त्रीणि त्रीणि
तेभ्यो न ज्यायः परमन्यदस्ति।
यस्तद्वेद स वेद सर्वं
सर्वा दिशो बलिमस्मै हरन्ति ॥
(छां० उ० २ प्र०। २ अ०। २१ खं०) इति।

एतासु मनोतासु परमेष्ठीमण्डलस्य या भृग्वङ्गिरोऽत्रिभेदात्तिस्रो मनोतास्तासामेव प्रकृते सम्बन्धः। घनतरलविरलावस्थात्रयभेदेन आपः,/ वायुः सोम इति त्रयो भृगवः संजायन्ते। अग्निः, यमः, आदित्यः, इति त्रयोऽङ्गिरसश्च। तत्र तृतीयोऽत्रिप्राणो भृग्वङ्गिरोवन्नत्रिविधः, अत एव न त्रिः-इति व्युत्पत्त्या स अत्रिः शब्देनोच्यते। अयंभावः-आपोमये परमेष्ठीमण्डले भृग्वङ्गिरोऽत्रय उत्पद्यन्ते। तत्र भृगुप्राणो अवस्थातारतम्याद् अब्वायुसोमात्मकः। आधुनिका य पदार्थमाक्सिजनशब्देन कथयन्ति स एवास्माकं पूर्वोक्तः पवमानो भार्गवो वायुः। एतमेव भृग्वङ्गिरात्मकमापोमयं परमेष्ठिमण्डलमभिलक्ष्य श्रुतिराह—

आपो भृग्वङ्गिरोरूपमापो भृग्वङ्गिरोमयम्।
अन्तरैते त्रयोवेदा भृगूनङ्गिरसः श्रिताः॥ इति।

इत्थं चास्मिन्नापोमये परमेष्ठिमण्डले यः सोम उत्पद्यते स एव निखिलविश्वजातान् पदार्थान्पवित्री करोति। पवित्रीकरणशक्तिरस्मिन्नेव सोमे वर्त्तते। सोमसंसर्गाद्, दुषितपरमाणवस्तत्क्षण एव नष्टा भवन्ति। एष हि सोमः—'तृतीयस्यांवै दिवि सोम आसीदिति'श्रुत्या सूर्य्यादपि ऊर्ध्वस्थाने तृतीस्यां दिवि निवसति। एतमेव पवित्रसोमं ब्रह्मणस्पतिरित्याचक्षते अर्थज्ञा वैदिकाः। एतमेव ब्रह्मणस्पतिनामानं सोममभिलक्ष्य भगवान् वेदपुरुष आह—

"पवित्रं ते विततं ब्रह्मणस्पते
प्रभुर्गात्राणि पर्येषि विश्वतः।
अतप्ततनोर्नतदामो अश्नुते
शृतास इद् वहन्तस्तत् समाशत॥"
(ऋक् सं० ६ मं०। ८३ सू०। १ मं इति

अयमर्थः-हे ब्रह्मणस्पते ! ते पवित्रं (तेजः) विततं-व्याप्तम्। प्रभुस्त्वं गात्राणि (पिण्डजातानि वस्तूनि) विश्वतः (आसमन्तात्) पर्येषि (परिवेष्टनं करोषि)। अतप्ततनूः (तापहितमग्निपरमाणुरहितं वस्तु) आमः (अपरिपक्वमुच्यते)। एतादृशमपरिपक्वं वस्तु तत् पवित्र तेजो नाश्नुते। अर्थात् तत्र सोमस्य मात्रा सवथा अल्पतमा भवति। परन्तु ये शृतास (अग्निपरमाणुबाहुल्यात् परिपक्वासः)पदार्थाः सन्ति तेषु तत् पवित्रं(पवित्रीकरणयुक्तः सोमः) वहन्त इव समाशात । युक्त एव व्याप्तो वर्तते। अर्थात् पक्वपदार्थेषु अयं सोमः आसमन्ताद् वेष्टितो भवति। एष हि सोमो दूषितपरमाणुन् विनाशयति, पीतः सन् मतिं वर्द्धयति, गौरूपसूर्य्यरश्मीनुत्पादयति, प्रकाशं च जनयति, औषधीनां पोषणञ्चविदधाति । एतान् सर्वान् सोमगुणानभिलक्ष्यैव महर्षिराह—

सोमः पवते जनिता मतीनां
जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य
जनितेन्द्रस्य जनितोत विष्णोः ॥१॥
त्वमिमा ओषधीः सोम विश्वा-
स्त्वमपो अजनयस्त्वं गाः ॥
त्वमाततन्थोर्वन्तरिक्षं
त्वं ज्योतिषा वि तमो ववर्थ ॥२॥ इत्यादि।
(ऋक् सं० ६।९६।५, १।९१ २२)

एष पवित्रसोमः, अम्भो नाम्न्य आपश्च परमेष्ठी मण्डलाद् अवतरन्ति। सोऽयं गङ्गावतारः। अयंभावः एष अम्भोमयः सोमः सूर्य्यमण्डलं भित्वा तद्द्वारेणास्माकं पृथिवीमण्डले आगत्य सर्वत्र विततो जायते। सूर्य्यः खलु आग्नेयप्राणसमूहः, अतः परमेष्ठित आगतस्य अम्भोमयस्य शैत्यप्रधानस्य, सोमस्य सौराग्नेयप्राणस्य च परस्परविरोधात् तयोः संघर्ष उत्पद्यते। अन्ततो गत्वा सूर्यरश्म्यवच्छिन्ना आग्नेयप्राणा अम्भोमयं पवित्रसोममुत्तरदिशि प्रक्षिपन्ति। अत एवैषादिक् सौम्यादिग् निगद्यते। सोम इत्र चास्या लोकराजः। एवं सूर्य्यरश्मिभिः पतितः सोमश्चन्द्रमण्डलद्वारा उत्तरदिशि पतितस्तत्र स्थितानां स्थूलापां समूहे संमिश्रितो जायते । तत् स्थानात् उत्तरदिक्तो हिमालयपर्वताद् विनिर्गता या सोममयी सरित् सैव त्रिपथगा भगवती भागीरथी गङ्गेत्युच्यते। सर्वप्रथममेष सोमः कुटिलगत्या सरलमार्गेण सूर्य्यमागच्छति, सूर्य्याच्च तिर्यक् प्रक्षिप्तः उत्तरदिशि गच्छति, ततश्च पुन पृथिवीमण्डले आगच्छतीत्यस्या भगवत्या गङ्गायास्त्रिपथगात्वं साधूपपद्यते। परमेष्ठी विष्णुरिति पूर्वोक्तम्। तत एवास्याः प्रादुर्भावो जायते, अत एवैषा विष्णुपदीतिनाम्ना निगद्यते। सूर्य्यमण्डलं भित्वा य आत्मा सूर्य्योपरि परमेष्ठीरूपे सामहात्मके गोसवनाम्ना प्रसिद्धे गोलोके गच्छति, अर्थात् सूर्य्यभेदी भूत्वा सूर्य्यसंस्थामण्डलाद् बहिर्निर्गच्छति, न स पुनरावर्त्तते, न स पुनरावर्त्तते। एषैवास्यमुक्तिः । तत्रैव मुक्तिस्थाने गाङ्गेयसोमः। स एव गंगातोयवर्त्तते । अतस्तत् सम्बन्धेनात्मनि तथाविधा शक्तिः संजायते यया च आत्मा सूर्य्यभेदनेसमर्थो भवेत्। एतादृशे मुक्तिप्रदे गङ्गातोये—आत्मसमर्पणेनात्मानं कृतकृत्यं मन्यमाना धन्या जनाः कथयन्ति—

'काकैर्निष्कुशितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं
स्रोतोभिश्चलितं तटाम्बुलुलितं वीचिभिरान्दोलितम्।
दिव्यस्त्रीकरचारुचामरमरुत् संवीज्यमानः कदा-
द्रक्ष्येऽहं परमेश्वरी त्रिपथगे भागीरथी स्वं वपुः॥

अयि मान्य विद्वांसः! गङ्गास्नानेन को लाभः, गृहस्थितयन्त्र पेयतया को विशेषो गङ्गातोये इत्यत्र नास्त्यावश्यकता अधिकवांगाडम्बरस्य। निदर्शनमात्रमेतत्। अस्माकं धर्म्मान्तर्गताः सर्वेऽपि आचार-

व्यवहारा विज्ञानक्रममवलम्ब्यैव प्रवर्त्तिताः। एवं च एतादृशैर्वैज्ञानिकैर्महामहिमभिराप्तपुरुषैर्निर्दिष्टः पूर्वोक्तो धर्म्मभेदोऽवश्यमेवास्मिः परिपालनीयः। यतः स्वस्वधर्म्मपरिपालनादेवाभ्युदयनिःश्रेयससिद्धि। विपरीते तु सर्वथा पतनमेव। सत्यं चैतत्। यदि हि नाम कश्चित् सैनिकत्वाभिमानी सैनिकाधिकारसिद्धमर्थं न कुर्य्यात्, वणिगधिकारसिद्धं वाणिज्यं च कुर्य्यात् तेनावश्यं सैनिकत्वाभिमानः परित्यक्तव्यः स्यात्, राजदण्डादिकं च भोक्तव्यं स्यात्। एवमेव यदि हि नाम कश्चिद् ब्राह्मणवंशजत्वाद् ब्राह्मणत्वाभिमानी, क्षत्रियवंशजत्वात् क्षत्रियाभिमानी वा, ब्राह्मणाधिकारसिद्धं क्षत्रियाधिकारसिद्धं वा कार्यमुपेक्षमाणो वणिगधिकारसिद्धं वाणिज्यं कुर्य्यात् तेनावश्य ब्राह्मणत्वाद्यभिमानं परित्यक्तव्यं स्यात्। इदमेव न अपि तु दारिद्र्यादिकृच्छ्रमपि भोक्तव्यं स्यात्। यतो हि विषयसिद्धिकारणभूताया वाणिज्योपयुक्तकतिपययोग्यताया ब्राह्मणत्वाद्यभिमानेन प्रतिबन्धकत्वान्नैव ब्राह्मणवंशजोऽयं ब्राह्मणो वैश्यवंशोत्पन्नस्य वणिज इव धनादिकोत्पादनेन तथाविधः समर्थो भवितुमर्हति। तस्मादुभयतः पतितोऽसौ सुखप्रयोजनभूतं न कंचन धर्म्मं धत्ते-इत्यवश्यं दुःखभाग् भवितुमर्हति। एवं चास्मिन्संसारे यथाधिकारसिद्धं कर्म्म परित्यजन् अन्यथा कर्म्म आचरन् कदाचिदपि न सुखीभवितुमर्हति। अत एव भगवता श्रीकृष्णेनोक्तम्—'

'सहजं कर्म्म कौन्तेय! सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृता॥

अत एव च भगवान् अर्जुनं क्षत्रियधर्म्मपालनार्थमादिशति। यथा हि—

१—स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते॥
२—यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रिया पार्थ! लभन्ते युद्धमीदृशम्॥
३—अथचेत्वमिमं सङ्ग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥

अत एव शूद्राणां वेदाध्ययनम्, यज्ञानुष्ठानादिकञ्च दृढं निवारयन्ति कल्पसूत्रकाराः। तस्माद्याभिः क्रियाभिस्तत्तदभिमतस्वरूपरक्षा जायेत त एव धर्म्माः, अन्यास्त्वधर्म्मा एव। अत एवोक्तं महाभारते—

धारणाद्धर्म्ममित्याहुर्धर्मो धारयते प्रजाः।
यत् स्याद् धारणासंयुक्तं स धर्म्म इति निश्चयः॥

एवं च 'निरस्तसमस्तभेदप्रपञ्चरहितस्य, व्यावहारिकदेहेन्द्रियान्तःकरणविशिष्टचैतन्यस्य यैः स्वरूपरक्षा जायेत त एव धर्म्माः' इति संसिद्धम्। एतच्च खलु देहेन्द्रियान्तःकरणजन्यत्वं देवत्तादिनानाशरीरभेदात् सर्वथा भिन्नभिन्नस्वरूपयुक्तं प्रत्येतव्यम्। यद्यपि साधर्म्यमपि वर्त्तते एतेषु चैतन्येषु परस्परम्, तथापि अधिकांशेन वैलक्षण्यमेवानुभूयते। यथा हि कस्यचिद्देहः स्थूलः, परस्य कृशः, कस्यचिच्चञ्चलं शरीरम्, कस्यचिच्चालस्ययुक्तम्। अपि च वातपित्तकफादीनां रसासृङ्मांसादीनां तारतम्येन बहून् खलु देहभेदान् आयुर्वेदविदो मन्यन्ते। एवं च शरीररचनावैचित्र्यं यथाऽस्माभिः प्रत्यक्षमनुभूयते तथैवान्तःकरणस्याप्यसंख्या एव भेदाः प्रत्येतव्याः। तथा हि कस्यचिदन्तःकरणं सत्वप्रधानम्, कस्यचिद् रजःप्रधानम्, अपरस्य तामसम्। ततश्च विभिन्नस्वरूपसंरक्षणाय विभिन्ना एव धर्म्मास्युरिति के नाम चक्षुष्मन्तो नावलोक्यन्ते। यथा वातपित्तकफादितारतम्येत शरीरभेदाद् भिषग्वरैश्चिकित्सा भिन्नभिन्नप्रकारेणैव क्रियते। न हि एकस्योपयुक्तं पथ्यं वस्तु अन्यस्य पथ्यमेव भवेत्। सर्वहितकरत्वेन सुप्रसिद्धं घृतमपि, पयोऽपि, अन्नमपि, उदकमपि कस्यचिन् मृत्यव एवोकल्पते- इति सुप्रसिद्धम्। अपि च यथा देशकालादिपरिस्थितिभेदादेषामाहारविहारादीनां भेदाः कल्पनीया भवन्ति, तथैवान्तःकरणादिष्वपि सैव व्यवस्था ज्ञेया। त एते धर्म्माः

सामान्यविशेषात्मका द्विविधा भवन्तीत्याकलनीयम् । सन्ति केचित् सामान्यधर्म्माः केचिच्च विशेषधर्म्माः । तत्र मनुष्यत्वरक्षका धर्म्माः सामान्यधर्म्मा उच्यन्ते । समाजव्यवस्थानिर्वाहेण मनुष्यत्वसंरक्षणाय सत्यम्, अहिंसा, दया इत्याद्याः सामान्या एते धर्म्मा मनुष्यमात्रस्य नियम्यन्ते, परन्तु एतेषां सामान्यधर्म्माणामपि देशकालाद्यनुसारेण शैथिल्यं मन्यन्ते स्मृतिकाराः । यथा हि—

" वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
एकस्मिन् यत्र निधने प्रापिते दुष्टकारिणः ।
बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः" इति ॥

एतदेव भिप्रेत्य महाभारते वनपर्वणि सिंहादीनां हिंस्रकजन्तूनां वधस्य समर्थनं कृतम् । एवं चैते सामान्यधर्म्मा मनुष्यमात्रोपकारका इत्यवगन्तव्यम् । अथ च विशेषांशरक्षणाय राजधर्म्मः, ब्राह्मणधर्म्मः, स्त्रीधर्म्म इत्यादयो ये धर्म्मा आवश्यका भवन्ति ते, विशेषधर्म्मा आख्यायन्ते । ते चैते विशेषधर्म्मा विशेषस्वरूपाणां भिन्नत्वाद् भिन्ना एव भवन्ति । एतदेवाभिप्रेत्योक्तमभियुक्तैः—

'स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्' इति

अत्र स्वधर्म्मशब्देन ज्ञानकृतधर्म्मभेद एव इष्टः । अर्थाद् वैज्ञानिकतत्वान्वेषणद्वारा तदाधारेण ये धर्म्मभेदा जायन्ते त एव मान्या ग्राह्याश्च, तेषामेव समाजोन्नतिसाधकत्वात् । ये च अज्ञानकृता धर्म्मभेदास्तेतु सर्वथा त्याज्या एव ।

यदपि "यः शास्त्रविधिमुत्सृज्य०" "सह नाववतु सह नौ भुनक्तु" "नेह नानास्ति किञ्चन" "ब्रह्मैवेदं सर्वम्" "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इत्यादिभिर्धर्म्मभेदस्याशास्त्रीयत्वं व्यवस्थापयन्ति, तदप्यकिञ्चित्करमेव । चत्वारो वर्णाः स्वस्वकार्येषु यथाधिकारं नियताः सन्तः परस्परं सहयोगभावेन यदि प्रतिष्ठिता भवन्ति, तदैव समाजस्योन्नतिः । विरोधे तु तस्योच्छेदापत्तिः । तस्मात् सर्वैरपि ईर्ष्याद्वेषादिकं परित्यज्य पारस्परिकसहयोगेन वर्त्तितव्यमित्येव तेषां तात्पर्यम् । असहयोगात् समाजे द्वेषाङ्कुरोत्पत्त्या तस्य विनाश इति स्पष्टम् । अत एवोपसंहारे स्पष्टमेव "मा विद्विषावहै" इत्युक्तम् । सर्वभूतहितरतिश्च भारतीयानां सुप्रसिद्धा । अयं पशु·-वयं तु मनुष्याः, इति स्वात्मन अन्यप्राणिभ्य उत्कृष्टत्वं भावयन्तो दम्भदर्पेणोन्मत्ताः पुरुषापसद एव उत्पथमनुगच्छन्ति । नैतदुचितम् । 'मा हिंस्यात् सर्वा भूतानि' इत्यादेशेन सर्वत्र आत्मन इव भाव्यमित्येव "शुनि चैव श्वपाकेच०" इत्यादिभिरुक्तम् । न च तेषु सहभोजनस्पर्शादिकस्य विधानं क्रियते । अन्यथा हि—'अनृतं-स्त्री शूद्रः, श्वा, कृष्णःशकुनिः, तानि न प्रेक्षेत"—इत्यस्य का गतिः स्यात् ? इति त एव वेदतत्वमर्म्मज्ञाः प्रष्टव्याः । तदित्थं सर्वसंदर्भेण समाजरक्षार्थम्, व्यक्तिभावरक्षार्थमावश्यमेव स्वस्वधर्म्मा परिपालनीयास्तदैव समुन्नतिर्देशस्य, राष्ट्रस्य, स्वात्मनश्चे" ति सम्यक् सिद्धम् । संसिद्धं च विज्ञानकृतधर्म्मभेदानां वेदमूलकत्वम् । ततश्च साधु सङ्गच्छते 'अस्ति वेदेषु धर्म्मभेदः' इति सिद्धान्तः । तस्मात् सर्वैर्वेदमाप्तवाक्यं सर्वदा शरणीकरणीयम् ।

१—"जातिजानपदान् धर्म्मान् श्रेणी धर्म्मांश्च धर्म्मवित्
समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मं प्रतिपादयेत् ॥
गौतमः——

२—विहितस्याननुष्ठानात् निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥
मनुः——

३—अकुर्वन् विहितं कर्म्म निन्दितञ्च समाचरन् ।
प्रसज्जश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥
मनुः——

४—येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायत् सतां मार्गं नरो गच्छन्न रिष्यति "

इति धर्म्मभेदेषु किञ्चिदिव निदर्श्य विरम्यतेति शम् ।